ह्रीः

# दुर्लभबौद्ध ग्रन्थशोधपत्रिका

# A Review of rare buddhist texts

## 4

दुर्लभ बौद्ध ग्रन्थ शोध योजना

केन्द्रीय उच्च तिब्बती शिक्षा संस्थान

सारनाथ, वाराणसी

1987

ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 4


सम्पादक

प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक






दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

बुद्धाब्द २५३१ कार्तिक पूर्णिमा ख्रीस्ताब्द १९८७


Courtesy: Shri Tarun Dwivedi, Surviving Son of Late Vraj Vallabh Dwivediji (15 Jul 1926 - 17 Feb 2012)

# Dhīḥ

## A Review of rare buddhist texts

# 4

*Editors*

PROF. S RINPOCHE
**Project Director**

PROF. VRAJVALLABH DWIVEDĪ
**Deputy Director**



भोट विद्या संस्थानम्

**RARE BUDDHIST TEXT PROJECT**
**Central Institute of Higher Tibetan Studies**
SARNATH, VARANASI

**B. E. 2531** **KĀRTIKA PŪRṆIMĀ** **C. E. 1987**

# धीः

## विषयानुक्रमणी


| | |
|---|---|
| अप्रकाशित स्तोत्र | |
| महोग्रतारास्तुतिः | 1–2 |
| कल्याणपञ्चविंशतिस्तोत्रम् | 3–6 |
| दुर्लभ ग्रन्थ परिचय—जनार्दन पाण्डेय | 7–23 |
| लुप्त बौद्ध वचन संग्रह—व्रजवल्लभ द्विवेदी | 24–35 |
| बौद्ध पारिभाषिक शब्दों का अभिप्राय—व्रजवल्लभ द्विवेदी | 36–48 |
| बौद्ध तन्त्रों में देवताओं के स्वरूप—1—जनार्दन पाण्डेय | 49–53 |
| दुर्लभ ग्रन्थों की आधार सामग्री—डॉ० ठाकुरसेन नेगी | 54–69 |
| नामसंगीति की अध्ययन सामग्रियाँ—3—बनारसी लाल | 70–82 |
| बौद्ध तन्त्रों में वज्रदेह का स्वरूप—डॉ० ठाकुरसेन नेगी | 83–97 |
| तन्त्र का स्वरूप एवं आभ्यन्तर भेद—वङ्छुग दोर्जे | 98–112 |
| ज्ञानोदय तन्त्र (लघु ग्रन्थ) | 113–136 |
| निबन्धों का संक्षिप्त परिचय (तिब्बती) | 137–142 |
| निबन्धों का संक्षिप्त परिचय (अंग्रेजी) | 143–146 |


●

प्रतिदिनमद्वयमसमं योऽनिशमनुसेवते तु तत्त्वाग्रम् ।
वज्रोपमममलमसौ कायं छायामयं लभते ॥

प्रज्ञोपायविनिश्चयसिद्धावनङ्गवज्रः, ५.४४

# महोग्रतारास्तुतिः

[ यह स्तुति केन्द्रीय उच्च तिब्बती शिक्षा संस्थान के ग्रन्थालय में उपलब्ध 'धारिण्यादिसंग्रह' ( पत्र 222-223, ग्रन्थांक 197 ) से ली गयी है। इस संग्रह का विवरण 'धीः' के द्वितीय अंक पृष्ठ 6 में द्रष्टव्य है। ]

ॐ नमः श्री उग्रतारायै

प्रकटविकटदंष्ट्रा घोररुद्राट्टहासा
नरशिरकृतमाला मेघगम्भीररावा।
त्रिभुवनजनधात्री खड्गविन्यस्तहस्ता
करकरतिकपाला पातु व उग्रतारा॥

घोररूपा(पे) महारावे सर्वशत्रुक्षयङ्करि।
भक्तेभ्यो वरदा(दे) देवि त्राहि मां शरणागतम्॥ 1॥

सुरासुरार्चिता(ते) देवि सिद्धगन्धर्वसेविते।
जाड्यपापहरे देवि त्राहि मां शरणागतम्॥ 2॥

सर्वमण्डल[मध्यस्थे] सर्वसत्त्वहितेऽनघे।
सिद्धानां पूजिते देवि त्राहि मां शरणागतम्॥ 3॥

घोररूपस्थिता(ते) देवि सर्वप्राणहरे स्तुते।
उग्रतारे नमो नित्यं त्राहि मां शरणागतम्॥ 4॥

जटाजूटसमारुह्य(युक्ते) ललज्जिह्वोर्ध्वकारिणि।
द्रुतबुद्धिप्रदे देवि त्राहि मां शरणागतम्॥ 5॥

सोमरूपे कोट्टरूपे चन्द्ररूपे नमोऽस्तु ते।
शक्तिरूपे नमस्तुभ्यं त्राहि मां शरणागतम्॥ 6॥

जडोऽहं शक्तिहीनोऽहं न तवाधिगमे क्षमः।
मन्दो मन्दमतिश्चाहं त्राहि मां शरणागतम्॥ 7॥

स्नाने दाने तथा जाप्ये बलिदाने तथा क्रतौ।
प्रस्थाने च न शक्तोऽहं त्राहि मां शरणागतम्॥ 8॥

शक्तिहीनमनाथं च सर्वपापसमन्वितम् ।
त्वां विना न गतिर्यस्य त्राहि मां शरणागतम् ॥ 9 ॥

गौरी लक्ष्मीर्महामाया उमा देवी सरस्वती ।
सर्वास्त्वमेव हे मातस्त्राहि मां शरणागतम् ॥ 10 ॥

गन्धपुष्पादिद्रव्यैश्च वन्दनादिभिरेव च ।
देवीं सम्पूज्य यत्नेन लभते वाञ्छितं फलम् ॥ 11 ॥

अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः ।
परमां सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ 12 ॥

मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां तर्कव्याकरणादिकाम् ॥ 13 ॥

इदं स्तोत्रं पठित्वा तु संग्रामे प्रविशेन्नरः ।
तस्य शत्रुः क्षयं याति सदा प्रज्ञा प्रजायते ॥ 14 ॥

पीडायामथ संधाने विपदायां तथा भये ।
य इदं पठते स्तोत्रं शुभं तस्य न संशयः ॥ 15 ॥

॥ इति महोग्रतारास्तुतिः समाप्ता ॥



# कल्याणपञ्चविंशतिस्तोत्रम्

[ यह स्तोत्र स्व० जगन्नाथ उपाध्याय जी के व्यक्तिगत संग्रह में उपलब्ध 'अप्रकाशित स्तोत्रसंग्रह' ( पत्र सं० 49-52, क्रमांक 83 ) से लिया गया है। इस स्तोत्र का विवरण 'धीः' प्रथम अंक, पृष्ठ 53 में दिया जा चुका है। ]

श्रीमानाद्यः स्वयम्भूरमितरुचिरमोघाभिधोऽक्षोभ्यबुद्धः
श्रीमान् वैरोचनाख्यो मणिभवमुनिराड् वज्रसत्वः सुसत्त्वः।
श्रीप्रज्ञा वज्रधात्वी सकलशुभकरी आर्यतारादिकास्ताः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 1 ॥

देवी सम्पत्प्रसादा गणपतिहृदया वज्रविद्राविणी सा
उष्णीषापर्णदेवी किटिवरवदना मातृका खेचराणाम्।
कोटी लक्षाक्षदेवी स्वगणपरिवृता पञ्चरक्षा सुरक्षा
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 2 ॥

रत्ने दीपङ्कराख्यो मणिकुसुमजिनः श्रीविपश्चो शिखी च
विश्वभुः श्रीककुत्सः कनकमुनिमुनिः काश्यपः शाक्यसिंहः।
प्रत्युत्पन्नाभ्यभूतः सकलदशबलो पारमाहात्म्यसिन्धुः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 3 ॥

श्रीमानार्यावलोकेश्वरजिनजवरो मैत्रेयानन्तगञ्जो
बुद्धः सामन्तभद्रः कुलिशवरधरो मञ्जुनाथो महेशः।
सर्वाघोरी ···· क्षितिज ···· खगर्भाभिधानौ महान्तौ
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 4 ॥

बुद्धाधिष्ठानकन्दोद्भववरकमलो नागदासाभिधानः
सत्यां तां योवनाथो निजवरभुवनाज्ज्योतिरेकं ससर्ज।
एकांशं पञ्च भूत्वा विहरति सततं पञ्चबुद्धात्मकोऽसौ
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 5 ॥

या प्रज्ञा गुह्यरूपा त्रिदलकमलजा सन्तु देवप्रसादा
नैरात्मा पीठरूपा बहुविहितहिता ब्रह्मविष्णवीशवन्द्या ।
दुर्गायां मार्गकृत्स्ने कृतनतिवरदा प्रादुरासीदगाधैः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 6 ॥

मैत्रीयांशादभूद् यो वनमहदुपरे रत्नचूडास्यरत्नं
ज्योतिः संगम्य भव्यं भवजलधितरो रत्नलिङ्गेश्वराख्यः ।
श्रीवत्सो वीतरागाष्टककृतमहिमा व्यक्तरूपाः(पः) स्वयम्भूः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 7 ॥

त्रातुं गोकर्णदुष्टं जपशिघृतमतिं लोकनाथाज्ञयाऽभूत्
पद्माकारं खगञ्जाभिधजिनतनयो वाग्मतीपूरतीरे ।
श्रीगोकर्णेश्वरः स पितृजनहतकृद् वाग्मतीसंगमेऽस्मिन्
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 8 ॥

क्रुद्धं नागाधिराजं कुलिकसमविधं त्रासयन् कीलवद् यो
लोकानां भद्रहेतोः गमनवदुपरि श्रीगिरौ वीतरागः ।
श्री सामन्ताद्यभद्रो ध्वजकृतिरभवत् कीलनामा महेशः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 9 ॥

पातुं तं सर्वपादं कमलधरगिरा वज्रपाणिर्जिहीते
लोकानां रक्षणार्थं पुनरपि कलशाकारतांशोदभूत् सः ।
श्रीमान् सर्वेश्वराख्यो जिनवरतनयो दण्डशूलौ दधानः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 10 ॥

दुर्बोधं मञ्जुगर्तव्यजनसुखरतं कामिनीसुप्रबोधं
कृत्वा प्राज्ञं महान्तं कविवरमकरोन्मञ्जुदेवस्ततोऽपि ।
श्वासं संधाय भव्यं सकलगुणपदं प्राप्य गर्तेशसंज्ञाः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 11 ॥

मत्स्याकाराभिरासीत् सकलवरणविष्कम्भिनामा सुसत्त्वः
सालङ्कारः फणीन्द्रैरवददखिलकान् योडियाख्यो ययासौ ।
निष्काश्याशं फणीन्द्रेश्वर इति समभूद् वीतरागोऽप्यरागः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 12 ॥

स श्रीमानोडियाने व्यततपतपसा सातपत्रः सुतोरे
पृथ्वीगर्भाख्यबौद्धो····झटिति तं स्थापयामास वासम् ।
गन्धेशो वीतरागोऽभवदखिलसुहृल्लोकनाथाग्रतस्थः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 13 ॥

शङ्खं दध्मत्सहर्षः स्मरदमितसुतं विक्रमात् प्राप्तसिद्धिः
यस्माल्लोकेश्वराज्ञाविनिहितहरयः प्रादुरासीत् खगर्भः ।
यः स्वांशं स्थापयित्वा निजपुरमगमद् विक्रमेशाभिधानं
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 14 ॥

नागस्तार्क्ष्येण यस्मादलभदनुसुखं पुण्यनामा सुतीर्थः
पार्वत्या यत्र तेपे कलहनिवसने शान्ततीर्थः प्रशान्तः ।
तप्तं रुद्रेण दुर्गाभिलषितमनसा शङ्कराख्यस्त्रिवेणः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 15 ॥

तीर्थो राजाभिधानो यदलभदवनीपालराज्यं विरूपो
व्याधश्चैतश्च यस्मात् सुरपतिसदनं प्रागमत् कामतीर्थः ।
वज्राचार्येण पश्यं यदभिषवकृतः संगमो निर्मलाख्यः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 16 ॥

दीनैराप्तं निधानं यदपचितिपरैराकराख्यो हि तीर्थो
ज्ञैर्लब्धं ज्ञानमस्माद् यदुदकमतिभिर्ज्ञानसंज्ञैकतीर्थः ।
चिन्तामण्याख्यतीर्थाभिधवदभिषवैर्यत्र प्राप्तोऽभिलाषः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 17 ॥

यत्र स्नातैर्मुदाप्तेतिसममभिधमभूद् यश्च प्रामोदतीर्थः
प्रादात् सल्लक्षणं यः स्वपयसि सरतां तीर्थसल्लक्षणाख्यः ।
यत्र स्नात्वा बलाख्यः सुरपतिरजयद् द्वीपमाख्यंभतीर्थः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 18 ॥

विद्याधर्याख्यदेवी गगनकृतपथा योगिनी वज्रपूर्वा
हारीतो श्रीहनूमान् सगणपतिमहाकालचूडाख्यवन्द्याः ।
ब्रह्माण्याद्याश्च देव्यः सहरिसुखवरक्षारनास्कन्दयुक्ताः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 19 ॥

वाग्मत्या मूलपुच्छप्रभृतय उपतीर्थास्तथा केशचैत्याः
शङ्खोच्चस्थाश्च जातोच्चयगिरिललितश्चैत्यभट्टारकोऽसौ ।
फुल्लोच्चो व्रष्टदेवी तदनु भगवतीध्यानप्रोच्चादिसंस्थाः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 20 ॥

मञ्जुश्रीपर्वतस्थोऽनुचरविरचितो मञ्जुशोभाख्यचैत्यः
शान्तश्रीनिर्मितेषु प्रकृतवसतयः पञ्चदेवापुरेषु ।
पुच्छाग्रश्चैत्यवर्योऽभ्यकथदनुपमं यत्र शाकेत्पुराशं
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 21 ॥

आधाराख्यो हृदिस्थः सगणफणिपतिर्विघ्नराजान्तकश्च
नागश्चानन्दलोके हरिहरिहरिवाहाख्यत्रैलोक्यवंशे ।
लोकेशायाक्षमत्वस्तदनु सफलयाशाभिलोकैकनाथः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 22 ॥

हेवज्रः संवरोऽसौ सपरिजनगणश्चण्डवीरस्त्रिलोको-
वीरो योगाम्बरोऽसौ यमनिधनकराद्या दश क्रोढ(ध)राजाः ।
गुह्या बाह्याश्च सर्वे परिमितप्रमुखा नामसंगीतिव्याख्याः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 23 ॥

शीर्षे प्रागात् पयोऽसौ सहितपरिजनश्चन्द्रसाहोसिनाद्रिः
छित्वा शोषे ह्रदेऽस्मिन् पुरवरकमलो लोकवासाः परस्य ।
स्वस्थीभूताम्बुसंस्थः सकलजिनवरं प्राभजन्मञ्जुनाथः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 24 ॥

सौखावत्याश्च वङ्गं तदनु जनहिते पोतले प्रागमद् यः
शान्तोऽवग्राहदोषे ललितपुरवरं प्राविशन् देवहूतः ।
स श्रीमान् वज्रपाणिः सजटधरहयग्रीवपार्षद्गणेशः
कल्याणं वः क्रियासुः क्वचिदपि सरतां तिष्ठतां नौम्यहं ताः ॥ 25 ॥

॥ इति स्वयम्भुपुराणोद्धृता कल्याणपञ्चविंशतिस्तुतिः समाप्ता ॥

# दुर्लभ ग्रन्थ परिचय

— जनार्दन पाण्डेय —

[ उपर्युक्त शीर्षक से 'धीः' के प्रथम अङ्क में 1. गुह्यसमयसाधनसंग्रह तथा 2. बौद्धस्तोत्रसंग्रह का परिचय दिया गया था। दूसरे अंक में 3. धारिण्यादिसंग्रह और 4. स्तोत्रसंग्रह का ( जिसमें बौद्धस्तोत्रसंग्रह, नामसंगीतिस्तोत्रसंग्रह तथा धारिण्यादिसंग्रह इन तीन ग्रन्थों से स्तोत्र संकलित किये गये थे ) तथा तीसरे अंक में 5. चर्यासंग्रह, 6. चर्याग्रन्थ और 7. चर्यापुस्तक का विवरण दिया गया था। इस प्रकार सात संग्रहों के अनन्तर प्रस्तुत अंक में निम्नलिखित स्फुट ग्रन्थों का परिचय दिया जा रहा है—

| ग्रन्थ | ग्रन्थकार |
|---|---|
| 8. वज्रवाराहीपरमरहस्यतन्त्र | |
| 9. संवररहस्यसाधन | श्री कलहंसकुमारपाद |
| 10. चक्रसंवरमहाप्रभुमण्डलपूजाविधि | ,, |
| 11. हेरुकाभिसमयतन्त्र | आचार्य लूयीपाद |
| 12. चिन्तामणिस्तोत्रटीका | आचार्य शाक्यबुद्धि |
| 13. हयग्रीवकल्प (हयग्रीवतन्त्र) | |
| 14. चतुष्पीठमण्डलोपायिका | आचार्य चर्यात्रितीपाद |
| 15. नानासिद्धोपदेश | |
| 16. योगावतार | आचार्य नागार्जुन |
| 17. स्वाधिष्ठानप्रभेद | आचार्य आर्यदेव |
| 18. शून्यसमाधि | |
| 19. गुह्यसमाधि | |

ये ग्रन्थ अपने में स्वयं महत्त्वपूर्ण हैं। भिन्न भिन्न स्रोतों से केन्द्रीय उच्च तिब्बती शिक्षा संस्थान के ग्रन्थालय में उपलब्ध मातृकाओं से इनका विवरण तैयार किया गया है। ]

## 8. वज्रवाराहीपरमरहस्यतन्त्र

**ग्रन्थ**—हेरुकाद्यवज्रवाराहीयोगराजोत्तमपरमरहस्य तन्त्र

**ल० सं०**—3.666

**पत्र सं०**—24,

**आधार**—नेपाली कागज, **लिपि**—नेवारी

**पूर्ण**

**प्रारम्भ**

ॐ नमः श्रीहेरुकाय। श्रीवज्रवाराहीयोगराजोत्तममाह—

अथातः संप्रवक्ष्यामि योगराजोत्तमोत्तमम्।
षट्चक्रस्य यथायोगं योगतन्त्राद् विनिर्गतम्॥
[1]जिह्वां तालुगतां कृत्वा योगी योगपरो भवेत्।
वीरस्य वीरजिह्वां [च] जिह्वा तालुतले पुनः॥
योगजं स्फारयेद् बुद्धं सर्वाशाकाशवस्तुषु।
सिद्ध्यते जन्मनीहैव मन्दपुण्योऽपि मानवः॥

**अन्त**

प्रणिपत्य ततः कृत्वा कामयेत् साधकः सदा।
प्रहृष्य तत्क्षणाद्वीरः सर्वज्ञः सर्वकृत्प्रभुः॥
सर्वत्रैलोक्यचारी च भगवन्तं साधकोत्तमः।
एष वीरो महावीरः सर्वद्वन्द्वविवर्जितः॥
येन विज्ञातमात्रेण पृथ्वी सागरमेखला।
वशमायान्ति ते क्षिप्रं सदेवा[सुर]मानुषाः॥

**पुष्पिका**

इति श्री श्री हेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्यदशमनिर्दशः॥

॥ समाप्तम् ॥ शुभम् ॥

**विवरण**

इस ग्रन्थ की मूल प्रति राष्ट्रीय अभिलेखागार नेपाल में है, जिसकी फिल्म प्रति केन्द्रीय उच्च तिब्बती शिक्षा संस्थान के ग्रन्थालय में भी आ गई है। उपर्युक्त विवरण डॉ॰ ठाकुरसेन नेगी की व्यक्तिगत प्रति से तैयार किया गया है, जिसे वे नेपाल से देवनागरी प्रतिलिपि करके लाये हैं।

**विषय विवेचन**

इस ग्रन्थ में दस निर्देश हैं। **प्रथम निर्देश** में षट्चक्र योग का प्रतिपादन है। नाभि, हृदय, कण्ठ, ललाट, शिर और तालु इन छः स्थानों में स्थित चक्रों के स्वरूप का वर्णन कर बताया गया है कि इसी योग से बुद्धत्व प्राप्त होता है। द्वितीय से पंचम तक के 4 निर्देशों में वसन्ततिलका का निदर्शन है कि किस प्रकार इस देह में वसन्तरूप हेरुक और बड़वानलरूपा वाराही (तिलका) व्याप्त हैं।

---

1. ये दो श्लोक ज्ञानोदय तंत्र में उद्धृत किये गये हैं, किन्तु उद्धरणस्थल का निर्देश वहाँ नहीं हैं।

**द्वितीय निर्देश** में हृदयस्थ पाँच नाड़ियों का विवरण है, जो बुद्धभूमियाँ कहलाती हैं।

**तृतीय निर्देश** में पीठ, उपपीठ तथा उनमें व्याप्त अजा आदि 8 नाड़ियों का विवरण है।

**चतुर्थ निर्देश** में क्षेत्र, उपक्षेत्र, छन्दोह, उपछन्दोह, मेलापक, उपमेलापक, श्मशान और उपश्मशान एवं उनमें स्थित 16 नाड़ियों का विवरण दिया है। इस प्रकार बुद्धादि दशभूमियाँ और 24 नाड़ियाँ काय-वाक्-चित्त चक्रों में वर्णित हैं।

**पंचम निर्देश** में यह सिद्ध किया गया है कि इसी पिण्ड (देह) में ब्रह्माण्ड है और इसी में बुद्धत्व प्राप्त होता है। इससे बाहर जो बुद्धत्व समझता है, वह मूर्ख है।

**षष्ठ निर्देश** में अध्यात्ममण्डलभावना और नाड़ी चक्रों का स्वरूप निदर्शित है। देह में 72000 नाड़ियाँ और उपनाड़ियाँ हैं, जिनमें 2000 प्रसिद्ध हैं। ये किस प्रकार षट्चक्रों का भेदन करके हेरुक को प्राप्त करती हैं, यह भी यहाँ बताया गया है।

**सप्तम निर्देश** में आभ्यन्तर होम, अर्थात् आध्यात्मिक पूजा का विधान है।

**अष्टम निर्देश** में आदिकर्मिक योगविधि बताई गई है कि शिष्य रोग-शोक आदि से त्रस्त होकर गुरु की शरण में जाने पर कैसे अनुग्रह प्राप्त करता है और इनसे मुक्त होता है।

**नवम निर्देश** में त्रिचक्रभेद से वज्रवाराही की भावना का विधान है।

**दशम निर्देश** में मण्डलसमयोत्तम को विस्तार से बताया गया है।

**प्रस्तुत ग्रन्थ में ग्रन्थान्तरों के उद्धरण**

पत्र 1. उक्तं च—

[1]वीरस्य वीरजिह्वायां जिह्वा तालुतले पुनः।
तालुदेशे तु वीरेशं कृत्वा ध्यानपरो भवेत् ॥
शिरोनाभिगतं चक्रमेकाराकृतिसंस्थितम्।
हृदयकण्ठसंस्थं तु वंकारसदृशं मतम् ॥
नाभिमध्ये गतं पद्मं चतुःषष्टिदलान्वितम्।
ऊर्ध्वमुखं महोज्ज्वालं भ्रमन्तं रथनेमिवत् ॥
निर्माणचक्रमध्यस्थं अंकारं च प्रभास्वरम्।
द्वात्रिंशद्व्यञ्जनान्येव अनुलोमविलोमतः ॥ इति।

---

1. यह श्लोक ज्ञानोदय तन्त्र में मिलता है।

2

पत्र 3. उक्तं च—

यज्जातरूपमणिशङ्खशिलाप्रवाल-
वैदूर्यताम्ररजतादिसुसंस्थितं च।
तत्रैष एव हि शशी गगनोदरान्ताद्
व्यावर्तमानवपुषा प्रतिभाति यद्वत् ॥

पत्र 4. पुनरुक्तं च—

निष्पन्दानन्दशुक्लः कुलिशमपि च तद्धारणाद् वज्रधृक् च
बीजं वा यस्य शुक्रं जिनजिगिति पिता नाभिचक्रे स शश्वत्।
तल्लक्षं लक्षमाणो हृदि परमसुखं नाथ आलोलिगेव
तद्वेद्यं येन कण्ठे धृगमचलसुखं वेद को रत्नधृक् सः ॥
प्रज्ञाधृग् येन तेन शिरसि धृतमिदं शुक्लवैमत्यसौख्यम्
उष्णीषे ब्रह्मरन्ध्रेऽक्षरपरमसुखं षोडशानन्दपूर्णम्।
या प्रज्ञा निःस्वभावा परमशशिकला षोडशी पूर्णिमान्ते
सानन्ता यस्य विद्या शिरसि स कुलिशे षष्ठमो वज्रसत्त्वः ॥

पत्र 22.

का ब्रह्मपदये पेट्टे अस्वेहि अद्धमुमहि सभावि ब्रह्मपदयेव न मेरु।
ब्रह्मण कुर्कुर चण्डालु एकुसभावे खद्दु ॥
स्वार्गद्दुषर्म अनधुर अनलाय गत ए।
भावाभाव विवज्जिअ पणमहु तत्तअए ॥

## 9. डाकिनीजालचक्रवर्तिश्रीसंवररहस्यं नाम साधनम्

**ग्रन्थ**—श्रीसंवररहस्यसाधनम्

**ग्रन्थकार**—श्री कलहंसकुमारपाद

**फोटो प्रति सं०**—5066

**पत्र सं०** 1-24, **पङ्क्ति सं० प्र० पं०**—10, **अक्षर सं० प्र० पं०** 66

**आकार**—17.5 × 11.5, **आधार**—ताड़पत्र, पूर्ण

**लिपि**—नेवारी ( भुजिमोल )

**प्रारम्भ**

ॐ नमः श्री चक्रसंवराय

विश्वाब्जरेणुपरिधूषरतिग्मरोचिः सन्मण्डलस्थहरमूर्ध्नि शिवामृताङ्घ्रिः।
पायाद्विकर्तनभुजश्चतुराननश्रीः श्रीचक्रसंवरमहाप्रभुरेष विश्वम् ॥

सुहृदामनुरोधेन स्मृतये चात्मनोऽपि च ।
कलहंसकुमारेण क्रियते साधनं विभोः ॥

इह तन्त्रे भावनाधिकृतः क्वचिन्मनोनुकूले स्थाने पर्यङ्कमारुह्य स्वहृत्कमलस्थपञ्चरश्मिक-हूंकारसिद्धिकश्चैतद्रश्मिभिः पुरतो गगनतले भगवन्तं चक्रसंवरं वक्ष्यमाणभुजमूर्धादि-संस्थानं गुरुबुद्धबोधिसत्त्वादींश्च दृष्ट्वा हूंकारं विविच्य निर्गतवक्ष्यमाणभुजमुख-वर्णादिभिः ।

**अन्त**

संस्मृतः संवरस्यैतद् भद्रस्य साधनं मया ।
कृतं तद्वीरवीरिण्यो अपि मर्षन्तु सत्कृपाः ॥
संवराभिसमयं विधाय यत् किञ्चिदत्र कुशलं मयार्जितम् ।
लोक एष सफलस्ततः प्रभोः संवरस्य पदवीमवाप्नुयात् ॥
उत्पत्तिक्रममादरात् प्रथमतोऽप्यायाच्चिरं तत्त्ववित्
मुद्रामन्त्रविशुद्धिबद्धहृदये श्री·······कृत्तस्य तत् ।
पश्चादुत्कर्षोदयादधिगतादन्तः प्रसादक्रमा-
दुत्पन्नक्रमभावनासु नियतः स्वेच्छाविदे विश्ववित् ॥ इति ।

**पुष्पिका**

डाकिनीजालचक्रवर्तिश्रीसंवररहस्यं नाम साधनं समाप्तम् ।
॥ कृतिरियं महापण्डितश्रीकलहंसकुमारपादानाम् ॥

**अवान्तर पुष्पिकाएँ**

इत्यादियोगोनाम प्रथमः समाधिः ।
इति मण्डलराजाश्रीनाम द्वितीयः समाधिः, साम्भोगिकश्च कायः ।
इति कर्मराजाश्रीनाम तृतीयः समाधिः, नैर्माणिकश्च कायः ।

## 10. श्रीचक्रसंवरमहाप्रभुमण्डलस्य पूजाविधिः

**ग्रन्थ**—चक्रसंवरमहाप्रभुमण्डलस्य पूजाविधिः
**ग्रन्थकार**—महापण्डित कलहंसकुमारपाद
**फोटो प्रति संख्या**—5066
**पत्र सं०** 3 ( 25-27 ), **पंक्ति सं०** प्र० प० 10, **अक्षर सं०** प्र० पं० 62
**आकार**—17.5 × 11.5 से. मी., **आधार**—ताड़पत्र,
**लिपि**—नेवारी ( भुजिमोल ) , **पूर्ण** ।

**प्रारम्भ**

नमः श्रीचक्रसंवराय

नत्वा श्रीसंवरं वीरं भवसमसमे बोधसिद्धये तस्य ।
श्रीकलहंसेनायं मण्डलपूजाविधिः क्रियते ॥

एतन्मण्डलाधिमुक्तः स्वहृत्कमलशून्यस्थितनिजबीजः क्वचिद् गोमयाद्युपलिप्तप्रदेशेषु गन्धादि-सहितसपुण्योदकदानपूर्वकं हस्तं दत्त्वा ॐ मादानवज्रो भव वज्रबन्ध हूँ इत्यनेनाधिष्ठाय ॐ सूक्ष्मातिसूक्ष्म हुं हूं फट् । ॐ गृह्ण 2 हूं फट् । ॐ गृह्णापय 2 हुं 2 फट् । ॐ आनये हो विद्याराज हुं फट् ।

**अन्त**

ॐ कृतो वः सर्वसत्त्वार्थः सिद्धिं दत्त्वा यथा तथा ।
गच्छध्वं बुद्धविधये पुनरागमनाय च ॥

इति श्रीतद्वन्दनेत्यादि पठित्वा मण्डलं विसृज्यात्मनि प्रवेश्य तद्गताहङ्कारेण विहरेदिति ।

पूजाविधिं गुरुपरम्परयागतं यच्छ्रीचक्रसंवरमहाप्रभुमण्डलस्य ।
कृत्वा मया कुशलमाश्रयतात्तु लोको यन्मण्डलप्रणयस्पर्शलसन्मुखश्रीः ॥

**पुष्पिका**

नहीं है ।
कृतिरियं पण्डिताचार्य श्रीकलहंसकुमारपादानाम् ।
सुराबीजकारीमलयहर्षनाम्नः पुस्तकोऽयम् ॥

**विवरण**

पूर्वोक्त चक्रसंवरसाधन तथा यह पूजाविधि दोनों एक ही मातृका में लिखे गये हैं। इनकी एशियाटिक सोसाइटी की मूल प्रति से की गई फोटो कापी के० उ० ति० शि० सं० के ग्रन्थालय में उपलब्ध है, जिसके आधार पर उक्त विवरण तैयार किया गया है।

## 11. हेरुकाभिसमयतन्त्रम्

**ग्रन्थ**—हेरुकाभिसमयतन्त्र

**ग्रन्थकार**—आचार्य लूयीपाद

**ल० सं० पं०** – 205, **वि० सं०** 88

**पत्र सं०**—1, 3-16, **पंक्ति प्र० प०** 4, **अक्षर प्र० पं०** 43,

**आकार**—23 × 5 से. मी., **आधार**—ताड़पत्र, **लिपि**—नेवारी (भुजिमोल)

**अपूर्ण** ।

**प्रारम्भ**

ॐ नमो वज्रडाकाय । प्रथमं तावद् योगेश्वरेण चतुर्ब्रह्मविहारिणा भाव्यम् । ततः पञ्च-स्कन्धा हूंकारमुत्पादयेत् । रूपस्कन्धे वैरोचनः । वेदनास्कन्धे वज्रसूर्यः । संज्ञास्कन्धे पद्मनर्तेश्वरः । संस्कारस्कन्धे वज्रराजः । विज्ञानस्कन्धे वज्रसत्त्वः । सर्वतथागततत्त्वे श्रीहेरुकवज्रः । चक्षुषो मोहवज्रः । श्रोत्रयोर्द्वेषवज्रः । घ्राणयोरार्ष्य(रीर्ष्या)वज्रः । वक्त्रे रागवज्रः । स्पर्शे मात्सर्यवज्रः । सर्वायतनैश्वर्यवज्रः ।

**अन्त**

श्रीकारमद्वयज्ञानं हेतुहेत्वादिशून्यता ।
रूकारापगतं व्यूहं क इति न क्वचित् स्थितः ॥
चित्तविश्राम्यते योगी निर्वाणं नैव दर्शितः ।
च्युतिकाले तु योगीनां श्रीहेरुकादिवीरयोगिनी ॥
नानापुष्पकरत्र्यश्रा नानाध्वजपताकाङ्किताः ।
नानातूर्यं[वि]निर्घोषा नानागीतोपहारिताः ॥
मृत्युनाम विकल्पोऽयं नीयते खेचरीपदे ॥

**पुष्पिका**

इति चक्रसंवरः श्रीहेरुकाभिसमयः समाप्तः ।
॥ कृतिराचार्यलुयीपादानामिति ॥ शुभमस्तु सर्वजगताम् ।

संवत् 479 (ने०) फाल्गुनशुक्लत्रयोदश्यां तिथौ पुष्यनक्षत्र सौभाज्ञ(ग्य)योगे सोमवासरे श्रीमानिगलोत्रविहारे दखिद्वार श्रीहोलवहारकुटुम्बवज्रप्रधाणाङ्ग महापात्र शारणराज-मल्लस्य स्वहस्तेन लिखितः । शुभमस्तु । श्रियोऽस्तु संवत् 480 जेष्ठकृष्ण-अष्टम्यां तिथौ उत्रभद्रनक्षत्रे सौभाज्ञ(ग्य)योगे आदितवासरे पतिष्ठादिवस जुरो ॥

**विवरण**

इस ग्रन्थ की मूल प्रति राष्ट्रीय अभिलेखागार नेपाल से उपलब्ध हुई है। यह प्राचीन नेवारी (भुजिमोल) लिपि में है, जिसकी देवनागरी में प्रतिलिपि कराकर स्व० प्रो० जगन्नाथ उपाध्याय अपने व्यक्तिगत संग्रह के लिये लाये थे।

ग्रन्थ में द्वितीय पत्र नहीं है और 3,4 पत्रों में भी बीच बीच में ताड़पत्र टूट जाने से पाठ खण्डित हो गया है, अतः अपूर्ण है।

**विषय विवेचन**

पत्र 5 के प्रारम्भ में '.....समाप्ता महासुखतारुणात्मिका' लिखा है। इसके पूर्व का पाठ खण्डित होने से विवेचन शक्य नहीं है। पत्र 5 से प्रथम चित्तचक्र में भावना के लिये डाकिन्यादि के स्वरूप का निदर्शन और अष्टार चित्तचक्र में पीठ-उपपीठों का विन्यास

दर्शाया है। तदनन्तर द्वितीय वाक्चक्र का विवेचन है, जिसमें क्षेत्र-उपक्षेत्र और छन्दोह-उपछन्दोहों का विन्यास है। फिर तृतीय कायचक्र में मेलापक-उपमेलापक, श्मशान-उपश्मशान का विन्यास है।

इसके बाद वीरयोगिनियों का स्वरूप, उनके स्थान, 37 बोधिपाक्षिकों के स्वरूप और स्थान बताये हैं। फिर पीठादि क्रमभेद से दशभूमिविशुद्धि पूर्वक कायमण्डल का विवेचन है। न्यास, तीनों चक्रों में स्थापित वीरयोगिनियों के मन्त्र, अर्चन, अभिषेक और विविध पदार्थ समर्पण के मन्त्र देकर सभी चक्रों में हेरुकादि भावना का प्रकार बताया है।

## 12. चिन्तामणिस्तोत्रटीका

**ग्रन्थ**—चिन्तामणिस्तोत्रटीका

**ग्रन्थकार**—आचार्य शाक्यबुद्धि

**ल० सं०**—5-133, **वि० सं०** 620, **फोटो प्रति सं०** 5069

**पत्र संख्या**—1-15, **पंक्ति सं० प्र० प०** 26, **अक्षर सं० प्र० पं०** 60,

**लिपि**—देवनागरी, **आकार**—16.8 × 11.8 से. मी., **पूर्ण**।

**प्रारम्भ**

·········राय,

लोकेश्वरशिरःशय्याशायिनः पान्तु वः शिवाः।
लोकत्रयैकगुरवः सौगताः पादपांशवः॥
अमलगुणजलौघक्षालितात्तं प्रणम्य
सकलभुवनरक्षादीक्षितस्याब्जपाणेः।
चरणयुगसरोजं भक्तितः संप्रणम्य
बहुमतविनिबद्धं स्तोत्ररत्नं विवक्षे॥

भगवतो लोकेश्वरस्याचार्य[भ]वगुप्तविरचितचिन्तामणिस्तोत्रमुभयथा चिन्तामणिरित्युच्यते—अर्थतः शब्दतश्च। अर्थतस्तावदन्यस्य मानं चिन्तामणिं वदति यथोक्तं पश्यति नाल्पपुण्यश्चिन्तामणिराजकल्पत्वमिति शरीरव्यवस्थानम्। पुनरस्य ग्रन्थस्योपोद्घातः।

**अन्त**

····बौद्धानां गुणानां निष्पत्तौ प्राणिनः पक्षपातमनुरागं लभन्तां त्वमिव। यथा त्वं लोकनाथो गुणसमृद्धौ पक्षपातं लब्धवान् तद्वत्।

इत्थं स्तोत्रमिदं विभज्य सुधिया भक्त्या मया यच्छुभं
प्राप्तं तेन समस्तवस्तुविषयग्राह्यग्रहं दूरतः।
त्यक्त्वा सर्वविकल्पजालतिमिरध्वंसि त्रियानाश्रयं
त्रैलोक्याधिपशाक्यबुद्धिविदितं तत्त्वं जनः पश्यतु॥

प्रद्वेषाविष्टचेताः पटुमतिविभवोऽप्येष विद्वेष्टि लोकः
प्रध्वस्तज्ञानचक्षुर्जनयति न गुणानात्मनीवापरस्य।
इत्थं सूक्तश्रवणसुरसाऽऽस्वादमन्दे जनेऽस्मिन्
मन्ये सूक्तव्यसनपरमाः साधवोऽस्मिन्निविष्टाः॥

**पुष्पिका**

॥ इति चिन्तामणिस्तोत्रस्य टीका॥
कृतिराचार्यशाक्यबुद्धेः॥ शुभम्॥

**विवरण**

इस ग्रन्थ की मातृका राष्ट्रीय अभिलेखागार काठमांडू नेपाल में है, जिसकी फोटो कापी के० उ० ति० सं० के ग्रन्थालय से प्राप्त हुई है। यह केवल टीका मात्र है, मूल **चिन्तामणिस्तोत्र** किसी सूचीपत्र में अभी तक उपलब्ध नहीं हुआ है। टीका अत्यन्त स्पष्ट और शुद्ध है। टीकाकार सभी विषयों का प्रकाण्ड पण्डित प्रतीत होता है। इस प्रति को मूल अर्धमागधी से प्रतिलिपि किया गया है। प्रतिलिपिकार को जो शब्द समझ में नहीं आये, उनका स्थान···रिक्त छोड़ दिया है। इससे बीच में खंडित हो गया है।
इसकी अभी तक 3 प्रतियों की सूचना मिली है—

1. राष्ट्रीय अभिलेखागार नेपाल—जिसकी यह फोटो कापी है
[1]2. ,, ,, —ल० सं० च० 122, पत्र सं० 39, ताड़पत्र, लिपि मैथिली
3. गायकवाड़ ओ० सी० बड़ौदा—सं० 13277, पत्र सं० 28, सी० नं० 28

**विशेष**

यद्यपि मूल स्तोत्र उपलब्ध नहीं है, टीका में भी श्लोक संख्या नहीं दी गई है, तथापि टीकाकार ने मूल ग्रन्थ का विषय-प्रतिपादन संक्षेप में इस प्रकार किया है—

"उपोद्घातस्त्रिभिः श्लोकैराद्यैः पञ्चाध्वानुपादाय धीशब्दयोरगोचरत्वेन स्तोत्रसमर्थत्वम्, तथापि तृष्णावशादविषयेऽपि प्रवृत्तिः, येन हेतुना धीशब्दयोरगोचरत्वं यथा चागोचरत्वं सर्वगुणानां सर्वाकारपरिपूर्णत्वं च, त्वन्नाम यतोऽवन्ध्यमित्यादिश्लोकेन परिपूर्णशरण्यताकारणम्, अपथमित्यारभ्य यावन्नैकभाजनजलगतबिम्बं शशाङ्कमित्यनेन निर्माणकायाश्रितः सत्त्वोपकारः, रूपिणमित्यारभ्य यावत्पश्यन्ति नाल्पपुण्याश्चिन्तामणिराजकल्पत्वमित्यनेन संभोगकायाश्रितो गुणविभागः। साक्षात्कृतोदयमित्यारभ्य यावदाच····चक्षतेत्यनेन यथाप्रधानं परसिद्धान्तप्रसिद्धगुणोद्भावनम्, विज्ञानमेव जगदित्यारभ्य सर्व-

1 इस प्रति की फिल्म कापी भी के० उ० ति० सं० ग्रन्थालय में आ गई है, अभी उसका विवरण तैयार नहीं हुआ है।

सुभाषितानामेकाश्रयत्वम्, .....रित्यारभ्य उपोद्घातनिर्दिष्टस्य मनोरथायामभूमिमपीत्यस्य समध्वरम्, अज्ञानराजयक्ष्मेत्यादिना एकवैद्यराजत्वम्, आर्यावलो....दिना शरणगमनम्, ततः परेण भक्तिबीजपरिणामनम्, मुदितादिभूमिसोपानमालयेत्यादिना भगवतः स्तोत्राभिधानपूर्वकं नमस्करणम्, इति त...वादादित्यादिना स्तोत्रपरिणामनमिति चिन्तामणिस्तोत्रस्य पिण्डाध्वः ॥"

**उपर्युक्त ग्रन्थ में प्रयुक्त ग्रन्थान्तरों के उद्धरण**

तथा चोक्तम्—"उद्गाता सामगः प्रोक्तः" ( पत्र 10 )

"ऋताः कुर्वन्ति ये यजुषमृत्विजास्ते उदाहृताः" ( पत्र 10 )

महाभारतसिद्धान्तवादिनां दर्शनमाह—

सर्वशत्रुविजेतारं प्राहुर्जितरणं बुधाः ।
परैर्न जीयते यस्तु तमाहुरपराजितम् ॥
पुरतोऽवस्थितान् शत्रून् हन्ति यः स रथः स्मृतः ।
सर्वदिक्षु स्थितान् यस्तु स वै अतिरथः स्मृतः ॥ ( पत्र 10 )

यथोक्तम्—

आपः पवित्रं परमं पृथिव्या अपां पवित्रं परमं च मन्त्रः ।
तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः ॥ ( पत्र 11 )

## 13. हयग्रीवकल्पः

**ग्रन्थ**—हयग्रीवकल्प ( हयग्रीवतन्त्र )
**ल० सं**—3.656, **वि० सं०**—112.11
**पत्र सं०**—1–15, **पंक्ति सं० प्र० प०** 14, **अक्षर सं० प्र० पं०** 40
**आधार**—नेपाली कागज, **आकार**—18.5 × 4.5 से. मी.
**लिपि**—नेवारी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमो लोकनाथाय

अथ खलु वज्रसङ्गिनो पद्मश्रीविद्यामहादेवी भगवन्तं महापद्मधरं प्रीत्याह्लाद्य सुष्ठु सौमनश्वे(स्ये)न तुष्टा मुहुर्मुहुरवलोक्य चन्द्रवदनमहामुखकमलपाणि चक्रीकृतभुजं समन्तं महापद्मनर्तेश्वरमहाकार्यशीन्दं(लं) जगत्त्रयनाथं महावज्रयोगिनीं वज्रसङ्गिनीं पद्मश्रीदशभूमीश्वरं महापद्मधरं पप्रच्छ—तद् भगवन् जम्बूद्वीपसत्त्वा अल्पायुपूरा मन्दभाग्या बहूपद्रवा बहुविघ्ना बहुशत्रव दरिद्राश्च बहुलाश्च । केनोपायेन तेषां करुणा कर्तव्या, कथं वा ते बुद्धधर्मषु नियोक्तव्याः ।

**अन्त**

ज्वरप्रशमनमन्त्रस्तत्प्रवचनमस्था न कर्तव्या:, तद्यथा—ज्वर ज्वरेन्द्र खसुख्ये ससम्पत्ति: महासम्पत्ति: अन्तक पातक सिकन्स महाकन्स सर्वज्वरामुकस्य सर्वज्वरसूतकेन सप्रगच्छये कर्तव्या: सप्तजप्तोरूकेन सप्ताभिमन्त्रितेन मुखादिधनभाजनं चेति। नमो रत्नत्रयाय। तद्यथा—कर2 जम्भनि2 स्तम्भनि2 सर्वरोगप्रशमनि स्वाहा, अनेन मन्त्रेण पूर्वाभिमुखेन स्थित्वा मुखं सप्तवारान् समर्च्य राजकुलं प्रविशेत् क्रूरो प्रसी इति।

**पुष्पिका**

इति श्री हयग्रीवकल्पसमाप्त:

यथालब्धः शुभमस्तु सर्वजगताम्। शुभम्॥

**विवरण**

यह ग्रन्थ राष्ट्रीय अभिलेखालय नेपाल से फिल्म रूप में के० उ० ति० शिक्षा संस्थान में उपलब्ध हुआ है, जिसके आधार पर यह विवरण तैयार किया गया है।

**विषय विवेचन**

जम्बूद्वीप में भूमि के अन्दर स्थान स्थान पर निधियाँ गड़ी हुई हैं, जिन्हें निकाल कर लोगों का दारिद्र्य दूर किया जा सकता है। इसमें धन कहाँ-कहाँ गड़ा है इसके लिये भूमिपरीक्षा, धन के अस्तित्व की विविध प्रकार से पहचान, शिव विष्णु बुद्ध आदि की प्रतिमा स्थापित करके धन का ज्ञान, धनवती भूमि की अन्य कई प्रकारों से पहचान, गुह्यवर्ति, अञ्जनविधि, विविधमन्त्र, गुटिकाविधि आदि द्वारा निधि की खोज का विधान बताया गया है। इसके बाद ग्रह, विनायक आदि की शान्ति का विधान है, जिससे दारिद्र्य दूर हो सके। रोग, कलह आदि के प्रशमन, मारण, मोहन, उच्चाटन, वशीकरण आदि के उपाय भी बताये गये हैं। अन्त में सकलकर्मंकरी गुटिका का विधान एवं ज्वर के प्रशमन का मन्त्र है।

## 14. चतुष्पीठमण्डलोपायिका

**ग्रन्थ**—चतुष्पीठमण्डलोपायिका

**ग्रन्थकार**—आचार्य चर्याव्रतीपाद

**ल० सं०**—5.89, **वि० सं०** 22, **फोटो प्रति सं०** 5078

**पत्र सं०**—30, **पंक्ति सं० प्र० प०** 12, **अक्षर सं० प्र० पं०** 70

**आधार**—ताड़पत्र, **आकार**—32 × 5 से. मी.

**लिपि**—प्राचीन नेवारी, **पूर्ण**।

**प्रारम्भ**

नमः श्रीवज्रडाकाय

नागार्जुनं प्रणम्यादौ चतुरक्षग्पूर्वंशः ।
अत्यन्ताप्रकटो गुह्यं बुद्धवाक्यं नमाम्यहम् ॥
एभिर्गुरूपदेशं तु पद्मस्थो मधुमालयम् ।
विसृष्टेर्ज्ञानतत्त्वस्य पूर्वधर्मं नमाम्यहम् ॥
बन्धयो वज्रचेतस्य अलिज्ञाने तु पङ्कजः ।
मधुममृतस्वादस्य द्विभिर्वाक्यं नमाम्यहम् ॥

**अन्त**

सहस्रद्वादशमं दीर्घं चतुष्पीठं तु विस्तरम् ।
एषां संग्रहवस्तूनि पिण्डसारसमुच्चयम् ॥
न छन्दतर्कवाक्यस्य अर्धमर्धेन संग्रहम् ।
गापितो योगतत्त्वेन म्लेच्छभाषेण भाषितम् ॥

**पुष्पिका**

इति चतुष्पीठमहायोगिनीतन्त्रराजे सर्वयोगनृत्यगेयपूजाविधिविस्तरमण्डलोपायिका सप्तविंशतिमः । कृतिरियं मण्डलोपायिका चर्याव्रतीपादानाम् इति ।

**विवरण**

इस ग्रन्थ की मातृका नेपाल जर्मन मैनुस्क्रिप्ट प्रिजर्वेशन प्रोजेक्ट नेशनल आर्काइब्ज काठमाण्डू नेपाल से फोटो की हुई के० उ० ति० शि० संस्थान के ग्रन्थालय से उपलब्ध हुई है ।

**विशेष**

नेपाल राष्ट्रीय अभिलेखालय में **चतुर्विंशतिपीठतन्त्रम्** नाम से एक मातृका है, जिसकी ल० सं० 125, पत्र सं० 14, लिपि देवनागरी है । इसमें 14 प्रकरणों में पुष्पिका है और पन्द्रहवाँ प्रकरण "पदावलम्बनं समतालयातोषणमवद्याचमनं दत्त्वा पुष्पादिभिः संपूज्य" यहाँ पर समाप्त किया है और "इति श्रीचतुर्विंशतिपीठतन्त्रं समाप्तम् ॥ शुभं भवतु सर्वदा ॥" लिखकर ग्रन्थ समाप्त कर दिया है। जब कि प्रारम्भ से यहाँ तक के सभी प्रकरणों की पुष्पिका और मूलपाठ चतुष्पीठमण्डलोपायिका का ही है। केवल 13वाँ प्रकरण पहले और 12वाँ बाद में लिखा है । 13वें की पुष्पिका नहीं है। जहाँ पर उक्त ग्रन्थ समाप्त किया है, वहाँ मण्डलोपायिका में 15वें प्रकरण की पुष्पिका देकर आगे अन्य प्रकरण लिखे गये हैं। इसका पाठ भी प्रायः अत्यन्त अशुद्ध है, जब कि मण्डलोपायिका का पाठ अपेक्षाकृत शुद्ध है ।

**विषय विवेचन**

इसमें 27 प्रकरण हैं और प्रत्येक प्रकरण का वर्णित विषय अवान्तर पुष्पिका से ज्ञात हो जाता है। जो इस प्रकार है—

शिष्यपरीक्षाविधिः प्रथमः।
पूर्वसेवादेवताराधनविधिर्द्वितीयः।
सर्वविशशिष्यपरीक्षाविधिस्तृतीयः।
भूमिपरिग्रहविधिश्चतुर्थः।
ज्ञानसूत्ररजःसंस्कारकुम्भस्थापनविधिः पञ्चमः।
मण्डलरक्षाविधिः षष्ठः।
आत्मयोगकरणविधिः सप्तमः।
लोकोत्तरज्ञानपरपीठदेवतामहामुद्रादिविधिरष्टमः।
योगपीठे लौकिकदेवतावर्णभुजवाहनविधिर्नवमः।
गुह्यपीठे वीराद्वयपूजाविधिर्दशमः।
द्वारचक्राकर्षणपानविधिरेकादशः।
लोकोत्तरसमाधिमन्त्रमुद्राविधिर्द्वादशः।
योगपीठदेवतासमयमन्त्रमुद्राविधिस्त्रयोदशः।
गुह्यपीठवीराद्वयसमयमन्त्रमुद्राविधिश्चतुर्दशः।
लौकिकलोकोत्तरदेवतावर्णपूजाविधिः पञ्चदशः।
बाह्यचतुष्कोणबलिपूजाविधिः षोडशः।
सर्वविशुद्धिपरमाद्यस्तुतिपूजाविधिः सप्तदशः।
लोकोत्तरतत्त्वगीतोपहारविधिरष्टादशः।
मण्डलाग्रदिशाबलिपूजाविधिरूनविंशः।
शिष्याधिवासनादिसंवरविधिर्विंशतितमः।
मण्डलदिशाहोमविधिरेकविंशतितमः।
पञ्चक्रमादि सर्वपूजाविधिर्द्वाविंशतितमः।
सर्वपूजामण्डलबलिविधिस्त्रयोविंशतितमः।
देवतापूजाविधिश्चतुर्विंशतितमः।
अष्टयोगिनीकवरशिक्षाविधिः पञ्चविंशतितमः।
सर्वाभिषेकशिक्षाविधिः षड्विंशतितमः।

चतुष्पीठमहायोगिनीतन्त्रराजे सर्वयोगनृत्यगेयपूजाविधिविस्तरमण्डलोपायिका सप्तविंशतितमः। इति ॥

## 15. नानासिद्धोपदेशः

**ग्रन्थ**—नानासिद्धोपदेश

फोटो प्र० सं० 21549

**पत्र सं०**—2, **पंक्ति सं०**—प्र० पृ० 6, **अक्षर सं० प्र० पं०** 57

**आकार**—14.5 × 3 से. मी., **आधार**—ताड़पत्र

**लिपि**—नेवारी, **पूर्ण** ।

**प्रारम्भ**

प्रज्ञोपाययोर्महासुखचक्रस्थमोङ्कारहकारादवतीर्णो ज्ञानचेतो मणिसूत्रवदेकीकृत्य दोलया महामुद्रोपदेशः । पद्माङ्कुरस्य ॥

कमलकुलिशान् भवित्वसद्विन्दुरनक्षरसि(शि)खाग्रतो महामुद्रोपदेशस्तत्त्वपारगः । महासुखचक्रावतीर्णो ज्ञानतन्तुं समरसीकृत्य दोलयो(या) सहजयोगः । प्रज्ञारक्षितस्य ॥

**अन्त**

अद्वयतो निःस्वभावता काकतुण्डोमुखेन वायुनिर्गमनरनासिकायां निर्गच्छेत् । अप्रविशद्वायौ हं नासाग्रे प्रज्ञा प्रज्ञापद्मनासाग्रे घोलरन्ध्रे च वासति शब्दं करोति सुखरूपं बिन्दुम् ॥ सुखादिकं प्रथमादेव भावनाया हस्तद्वयाङ्गुल्या पीडयेत् । भावनाप्रकर्षण मन्त्रयेत् ॥

**पुष्पिका**

इति नानासिद्धोपदेशः ॥

**विषय विवेचन**

साधना की अन्तिम परिणति है महामुद्रा । इससे बोधिसत्त्व की प्राप्ति हो जाती है । इसके विषय में विभिन्न सिद्धों के अपने अनुभव इस ग्रन्थ में बताये गये हैं कि किस सिद्धपुरुष ने किस रूप में महामुद्रा का उपदेश किया । अत्यन्त लघु ग्रन्थ होने पर भी यह अति महत्त्वपूर्ण है । इसमें 14 सिद्धों के मतों का संग्रह है ।

### प्रस्तुत ग्रन्थ में संगृहीत सिद्धों के नाम

1. पद्माङ्कुर
2. प्रज्ञारक्षित
3. नेलीपाद
4. रविगुप्त
5. कृष्णाचार्य
6. सरहपाद
7. महीधरपाद
8. भूरिपाद
9. विरूपाचार्य
10. नागबुद्ध
11. दिङ्नाग
12. मातलि
13. वीणापाद
14. वीर मर्य(त्स्ये)न्द्र

## 16. योगावतारः

**ग्रन्थ**—योगावतार

**ग्रन्थकार**—आचार्य नागार्जुन

**ल० सं०**—366, **फोटो प्रति सं०**—21548

**पत्र सं०**—1-2, **पंक्ति सं० प्र० प०** 5, **अक्षर सं० प्र० पं०** 53

**आकार**—14.7 × 3 से. मी., **आधार**—ताड़पत्र

**लिपि**—प्राचीन नेवारी, **पूर्ण** ।

[ इसमें केवल 8½ कारिकाएँ हैं, अतः आद्यन्तमात्र न देकर पूरा ग्रन्थ ही यहाँ उद्धृत किया जा रहा है । ]

नमस्तारायै

श्रुत्वा शास्त्रमुदारं निश्चित्य पारमार्थिकं तत्त्वम् ।
मृद्वासनोपविष्टः सश्रद्धो योगमारभेद्[योगी]॥ 1 ॥
ग्राह्यग्राहकमुभयं नोभयमहमेव निर्वृतिर्मग्न इति ।
बहुविधविकल्पजालं प्रविज्ञाय मनःसमापत्तिः ॥ 2 ॥
ज्ञेयं विलोक्य सकलं मा योग···मेव निर्भासम् ।
प्रविवाच्ये देहे यत् तत्तथताज्ञानवज्रेण ॥ 3 ॥
सर्वाकारविवर्जितमाद्यन्तविभागरहितमविकल्पम् ।
निर्मलसहस्रदीधितिनिर्भिन्नमेति सर्वज्ञगनमिव ॥ 4 ॥
स्वाकारमात्रशेषं पश्यति चित्तं स्वमाद्यनुत्पन्नम् ।
येनापि पश्यतीदं तदपि तथैवावलोकयति ॥ 5 ॥
सोऽनुपलम्भोऽचित्तं तथताज्ञानं तत्कोटिश्च ।
एवं तमसोऽभ्यासात् प्रज्ञावेदितनिरोधमाप्नोति ॥ 6 ॥
ताभिर्युक्तो योगी सत्त्वार्थमनेकधा कुरुते ।
अस्मिन् परिनिष्पन्ने तिष्ठति योगी सदार्यमध्वानम् ॥ 7 ॥
····दनघवायौ निष्कम्प्यं क्लेशमाराद्यैः ।
प्रज्ञापारमितां वास्मिन् सर्वदा प्रवृत्तस्य ॥ 8 ॥
सिध्यन्त्यन्ये बहवः समाधियोगदानरागाद्याः ।

**पुष्पिका**

॥ योगावतारः समाप्तः ॥

॥ कृतिरियमार्यनागार्जुनपादानामिति ॥

### विवरण

योगावतार, स्वाधिष्ठानप्रभेद और प्रज्ञोपायविनिश्चयसिद्धि—ये तीनों ग्रन्थ ताड़पत्र पर एक साथ लिखे गये हैं। इनकी मूल प्रति नेपाल राष्ट्रीय अभिलेखालय में है, जिसकी फोटो कापी सम्पूर्णानन्द सं० वि० वि० के ग्रन्थालय में है, उसी की जीराक्स प्रति के० उ० ति० शिक्षासंस्थान के ग्रन्थालय से उपलब्ध हुई है।

## 17. स्वाधिष्ठानप्रभेदः

**ग्रन्थ**—स्वाधिष्ठानप्रभेद
**ग्रन्थकार**—आर्यदेव
**ल० सं०** 366, **फोटो प्र० सं०** 21548
**पत्र सं०**—1-3, **पंक्ति स० प्र० प०** 6, **अक्षर सं० प्र० पं०** 49
**आकार**—14.7 × 3 से.मी., **आधार**—ताड़पत्र
**लिपि**—प्राचीन नेवारी, **पूर्ण**।

### प्रारम्भ

ज्ञानमूर्ति नमस्कृत्य सर्वदृष्टिविदारकम्।
स्वाधिष्ठानप्रभेदोऽयं वक्ष्यते कृपया मया॥
अस्तीति कल्पना यावत् तावच्छाश्वतकल्पना।
प्राग्वर्तीति निवेशोऽयं नेदं मायास्वलक्षणम्॥
नास्तीति कल्पना यावत् तावदुच्छेदकल्पना।
उच्छेदाभिनिवेशोऽयं नेदं माया स्वलक्षणम्॥

### अन्त

ये पर्वता अष्टमहासमुद्रा द्वीपाश्च सर्व नरकादिभेदाः।
यत्स्थावरं जङ्गममेव दृष्टं तत्तु स्वयं सर्वविदेव नान्यत्॥

एवं स्वचित्तमयमेव जगत् समस्तं
विज्ञाय मोक्षनवकल्पनया विमुक्ताः।
ये न भ्रमन्ति भवकल्पमहार्णवेषु
तेभ्यो नमोऽस्त्वखिलसंस्कृतपारगेभ्यः॥

### पुष्पिका

स्वाधिष्ठानप्रभेदः समाप्तः॥ कृतिरियमार्यदेवपादानाम्॥

**विवरण**

एक ही साथ आचार्य नागार्जुन का योगावतार, आर्यदेव का स्वाधिष्ठानप्रभेद तथा पद्म-वज्रपाद की प्रज्ञोपायविनिश्चयसिद्धि एक ही ग्रन्थ में ताड़पत्र पर लिखे गये हैं, योगावतार का विवरण अभी दिया गया है। प्रज्ञोपायविनिश्चयसिद्धि गुह्यादि-अष्टसिद्धि-संग्रह में प्रकाशित हो रही है।

## 18. शून्यसमाधिः

**ग्रन्थ**—शून्यसमाधि

**ल० सं०**—5-63, **वि० सं०** 135

**पत्र सं०**—1-6, **पंक्ति सं० प्र० प०** 14, **अक्षर सं० प्र० पं०** 42

**आधार**—नेपाली कागज, **आकार**—34 × 12½ से. मी.

**लिपि**—देवनागरी, **पूर्ण**।

**विवरण**

यह ग्रन्थ नेपाल राष्ट्रीय अभिलेखालय से फिल्म रूप में के० उ० ति० शि० सं० के ग्रन्थालय में आया है। यह **तत्त्वज्ञानसंसिद्धि** से अभिन्न है, जिसके मूल, टीका तथा अनुवाद सहित कई संस्करण प्रकाशित हो चुके हैं। इसके रचयिता शून्यसमाधि हैं, जैसा कि अन्तिम पुष्पिका से भी स्पष्ट है—

समाप्तोऽयं तत्त्वज्ञानसंसिद्धिर्नाम स्वाधिष्ठानं चेति। कृतिरियमाचार्यमञ्जुघोषाधिष्ठिता-चार्यश्रीभद्रपादपङ्कजपरागप्रणयितपण्डितश्रीशून्यसमाधिपादानामिति ॥

प्रस्तुत हस्तलेख में ग्रन्थकार के नाम को ही ग्रन्थ का नाम लिख दिया गया है। यद्यपि माघ, भट्टि आदि काव्य-ग्रन्थों में यह परम्परा रही है, परन्तु अन्यत्र भ्रान्तिजनक ही है।

## 19. गुह्यसमाधिः

**ग्रन्थ**—गुह्यसमाधि

**ल० सं०**—3.283

**पत्र सं०**—146,

**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**विवरण**

यह ग्रन्थ भी नेपाल राष्ट्रीय अभिलेखालय से फिल्म रूप में केन्द्रीय उच्च तिब्बती शिक्षा संस्थान के ग्रन्थालय में आया है। यह गुह्यसमाज तन्त्र का वही अंश है, जो गायकवाड़ ओरियण्टल सीरीज बड़ोदा से प्रकाशित है। केवल मुखपृष्ठ पर 'गुह्यसमाधि' के अतिरिक्त भीतर ग्रन्थ में कहीं यह नाम नहीं है।

# लुप्त बौद्ध-वचन संग्रह

—व्रजवल्लभ द्विवेदी—

[ इस शीर्षक के अन्तर्गत 'धीः' के प्रथम तीन अंकों में नामांकित ग्रन्थों से ग्रन्थों और ग्रन्थकारों के लुप्तप्राय वचनों का संग्रह आवश्यक टिप्पणियों के साथ किया गया था। प्रस्तुत अंक में प्रधानतया सुभाषित-संग्रह में उद्धृत ग्रन्थों और ग्रन्थकारों के वचनों को संकलित किया जा रहा है, जो कि हमारी जानकारी में अभी तक अल्पज्ञात हैं। ]

## अनुत्तरसन्धि[1]

( 2 )

[2]यः शाठ्यबुद्धिरलसो गुरुनिन्दकश्च
प्राप्ताभिषेक इति गर्वितमानसः स्यात्।
सर्वज्ञता न सुलभेति विहीनचित्तो
दोषान् स पश्यति गुरोर्न गुणान् वराकः॥

शुश्रूषया विरहितो लघु तत्त्वमिच्छ-
न्नेति प्रशस्तवचनं चलयेत् सरोषः।
दृष्ट्वा सभासु गुरुमस्य पराङ्मुखस्तु
कुर्यात् प्रणाममथ तस्य रहोगतस्य॥

एवं च दौरात्म्यहतं कुशिष्यं
स्वपुत्रमप्यौरसमार्यगर्ह्यम्।
वैश्यं तथा पार्थिवमग्रजं वा
कुर्यात् समीपे नहि जातु वीरः॥

शुभगुणसुसमेतो ज्ञानवान् वीर्ययुक्तो
गुरुजनमथ भक्त्या वीक्षते बुद्धतुल्यम्।
अधिगतजिनधर्मः शासने सुप्रसन्नः
स इह भवति पात्रं तस्य कुर्यात् प्रसादम्॥

---

1. सुभाषितसंग्रह ( पृ० 12 ) में इसको शाक्यमित्रपाद की रचना माना गया है।
2. सुभाषितसंग्रह, पृ० 12-14

श्रुतबहुतरतन्त्रोऽप्यागमे सुप्रवीणो
गुरुजनपरिचर्याप्राप्ततत्त्वोपदेशः ।
स्वहितमपि स कर्तुं न प्रभुः शास्त्रचञ्चु-
र्भवति तदपि शास्त्रं केवलं खेदहेतु ॥

अथ भवति सभाग्यः प्राप्ततत्त्वोपदेशो
जडमतिरसमर्थो मीलनेऽर्थस्य यस्तु ।
परहितकृतबुद्धिर्देशनायां प्रवीणो
वचनगुणविहीनः सोऽप्यवज्ञामुपैति ॥
श्रुतबहुतरतन्त्रो ज्ञानवान् षट्पदज्ञः
श्रुतिमतिधृतिमेधावीर्यसम्पत्समेतः ।
गुरुजनपरिचर्याप्राप्ततत्त्वोपदेशः
प्रभवति स हि वक्तुं तन्त्रराजोपदेशम् ॥

## केरलीपाद

( 1 )

[1]तत्त्वं प्रकाशते शुद्धं प्रकाशात् परमं पदम् ।
तस्माल्लक्षणयेद् धीमान् निश्चलं सूक्ष्ममानसम् ॥
यावन्नाभासतामेति तावदभ्यासमानयेत् ।
प्रभास्वरपदे प्राप्ते स्वेच्छाकामस्तु जायते ॥

## गुह्यावली[2]

( 1 )

[3]तत्रादौ विरमस्य शेषपदवीरागस्य मध्यक्षणे
त्यक्त्वा स्त्रीसुखमन्यदक्षरसुखं गृह्णाति यस्तन्मयः ।
स श्रीमान् घनसारमुद्रणविधौ विज्ञो गुरोराज्ञया
स्वानन्दासवपानघूर्णितमना नाभ्येति मोहं सुधीः ॥

1. सुभाषितसंग्रह, पृ० 66
2. सुभाषितसंग्रह ( पृ० 72 ) में इसको दोड़ोपाद की रचना माना गया है ।
3. सुभाषितसंग्रह, पृ० 72-74; इन श्लोकों की संस्कृत टीका भी यहाँ दी गई है ।

प्रियासङ्गात् पूर्वं यदधिगतमात्यन्तिकसुखं
तदेवेदानीं चेत् किमनु वरमुद्राधिगमनम् ।
इहास्ते संविद्बाह्यसुखविषयादन्यदपरं
ततः कोऽप्येषोऽन्यः सहजसुखशम्भुः प्रभवति ॥
अधिष्ठाने धन्ये जनितवरकर्माण्यपि सुरे
प्रभावः कोऽप्येष ध्वनयति तदन्तर्विनिहितम् ।
प्रभावस्याभावात् पशुसदृशयोगेश्वरनरः
सुरोऽप्यन्तःशून्यो मृदुगुरुशिलाकल्पितवपुः ॥
आनन्दद्वयमध्यजक्षणमतिक्षुद्रं न संलक्ष्यते
तत्काले कथमाकरोतु मनसा वज्राब्जयोगात् पदम् ।
तस्मादक्षरसौख्यमेव सुजनैराश्रीयते यत्नतः
स्थित्वा तत्र चिरं समाहितजनो गृह्णाति तत्त्वं पुनः ॥
द्विधा तत्त्वज्ञानं सवचनमवाच्यं किमपि च
क्रमत्यङ्गादेकं यदपरमितो न क्रमति [तत्] ।
द्वयोरेकत्वे यः सततमविरोधात् प्रभवति
स्वतःसिद्धः सोऽयं भिदुरधरमार्गोत्तरगुरुः ॥

## घण्टापाद[1]

( 2 )

[2]इदानीं मणिपूरकक्रमोऽभिधीयते—समयमुद्रामहायोगविधानेन वज्रस्याग्रे मणौ बोधिचित्ते गते यादृशं सुखमुत्पद्यते, गुरूपदेशात् तत् सम्यक् समुपलक्ष्य स्थिरीकृत्य तन्मयतामुपनीतं वज्रधरत्वमिहैव जन्मनि संजनयति नित्यमेवाविचारेणेति ।

द्वितीयक्रमोऽपि कर्ममुद्राप्रकारेणोपलभ्य स्थिरतां गतं बोधिचित्तं शाश्वतरूपं परमार्थनिर्विकल्पस्वभावं जातं सद् वज्रधरत्वं सम्पादयतीति ।

तृतीयक्रमोऽपि पूर्वानुभूतं स्मरणसंभूतं धर्ममुद्रा-मानसीमुद्रा-प्रभवं सम्यक्स्थिरतां गतं वज्रधरत्वं जनयतीति ।

चतुर्थक्रमोऽपि मणिपूरकाख्य उच्यते । चित्तं सर्वगतमवलम्बनरहितं सकलस्थिरचलस्वभावं त्रैधातुकव्यापिनीशून्यतामहामुद्रालिङ्गितमचिन्त्यस्वभावं गुरुप्रसादादुत्पन्नं स्थिरीकृतं महावज्रधरत्वं सम्पादयति सकलमहामुद्रासुखं जनयति ।

---

1. यह उद्धरण सुभाषितसंग्रह ( पृ० 71 ) में घण्टापाद के पंचक्रम का बताया गया है ।
2. सुभाषितसंग्रह, पृ० 71-72

## डाकिनीवज्रपञ्जर

( 10 )

[1]रागेणोत्पद्यते लोको रागाक्षेपात् क्षयं गतः।
वज्ररागपरिज्ञानाद् वज्रसत्त्वो भवेन्मनः॥

## दारिकपाद

( 2 )

[2]भव एव....बोधिचित्तस्वभावेन चित्तं विज्ञायते। उभयो.... समरसीकृत्वा चिन्त्याचिन्त्यविवर्जितः।....महागोप्यनिलयः स्याद् योगी योगस्य महागोप्यस्य।

## देवेन्द्रपरिपृच्छातन्त्र

( 1 )

[3]एकारस्तु भवेन्माता वकारस्तु पिता स्मृतः।
बिन्दुस्तत्र भवेद् योगः स योगः परमाक्षरः॥
एकारस्तु भवेत् प्रज्ञा वकारः सुरताधिपः।
बिन्दुश्चानाहतं तत्त्वं तज्जातान्यक्षराणि च॥
यो विजानाति तत्त्वज्ञो धर्ममुद्राक्षरद्वयम्।
स भवेत् सर्वसत्त्वानां धर्मचक्रप्रवर्तकः॥
योऽविदित्वा पठेन्नित्यमक्षरद्वितयं जनः।
स बाह्यो बुद्धधर्माणां धनिवद् भोगवर्जितः॥

तथा—

निष्पीड्य कमले वज्रं बोधिचित्तं च नोत्सृजेत्।
त्रैलोक्यं तन्मयं कर्तुं वैद्यवाक्यं न लङ्घयेत्॥
आकाशे शशिसङ्काशं वीरं ब्रह्माण्डगोचरम्।
ध्यायाद् द्वयोदये भूतमद्वैतपददायकम्॥ इति।

तथा—

शुक्रक्षरणयोगेन भावयेत् परमाक्षरम्।
आधारे च्युतिमापन्ने आधेयस्य विरागता॥

1. सुभाषितसंग्रह, पृ० 51
2. सुभाषितसंग्रह, पृ० 66
3. सुभाषितसंग्रह, पृ०76-77

## प्रजा(ज्ञा)तन्त्र

( 1 )

[1]उत्पत्तिभागं कथितमुत्पन्नं कथयाम्यहम् ।
खधाताविति पद्मेषु ज्ञानं भगमिति स्मृतम् ॥
भावनेति समापत्तिस्तत्सुखं ध्यानमुच्यते ।
यथान्यायं खमुत्पाद्यं बोधिचित्तं तु रे(दे)वतेति ॥

( 2 )

[2]रागेण बद्धयते लोको रागेणैव विमुच्यते ।
विपरीता भावना एषा न ज्ञाता बुद्धतीर्थिकैः ॥

( 3 )

[3]येन तु येन तु बध्यति लोक-
स्तेन तु तेन तु बन्धन मुञ्चे ।
लोको मुह्यति वेत्ति न तत्त्वं
तत्त्वविवर्जित सिद्धि न लप्से ॥

## बुद्धकापालतन्त्र[4]

( 5 )

[5]यो हि त्यक्ते योगी भवेत् तत्त्वपरायणः ।
स तु नहि शून्यताभावं ददातीत्यादिविस्तरः ॥
निर्विकल्पो यदा वीरः स्थितिं हित्वा तु लौकिकीम् ।
आचरेत् सर्वकार्याणि बुद्धः पश्यति तं सदा ॥
बालवद् विचरेद् युक्त्या सर्वतश्छिन्नसंशयः ।
निराभासो यदा योगी सदा वर्षन्ति सम्पदः ॥
अशेषपापयुक्तानां मोहावरणसुस्थिताः ।
उन्मत्तव्रतयोगेन षण्मासामोघसिद्धयः ॥

---

1. सुभाषितसंग्रह, पृ० 43
2. ,, ,,
3. ,, ,,
4. बुद्धकपालयोगिनीतन्त्र से यह अभिन्न होना चाहिये ।
5. सुभाषितसंग्रह, पृ० 86-88

सर्वबुद्धान् स्वयं पश्येत् सर्वकामैः प्रपूर्यते।
न क्षीणो न च हानित्वं स्वेच्छायुर्जायते वपुः॥
गम्भीरपदं नित्यं गच्छेस्तिष्ठन् निषण्णकः।
प्रभास्वरविज्ञानकौशल्याद् योगीनां लक्षणे सदा॥
अनेनैव हि योगेन चित्तरत्नं दृढीभवेत्।
अधिष्ठानं च कुर्वन्ति बुद्धा बोधिप्रतिष्ठिताः॥
एवं भूविनिविष्टस्तु भावयेद् भावतत्परः।
यावन्न खिद्यते चित्तं समाहितमनाः सुधीः॥
स्य(खि)न्नस्तु पर्यटेत् पश्चाद् यथारुचितचेष्टितः।
भावयन् विपुलां बोधिमीषदुन्मीलितेक्षणः॥
हसन् जल्पन् क्वचित् तिष्ठन् क्वचित्कुर्यात् प्रवर्तनम्।
भावनासक्तचित्तस्तु यथा खेदो न जायते॥
एवं समाधियुक्तस्य निर्विकल्पस्य मन्त्रिणः।
कालावधिं परित्यज्य सिद्ध्यतेऽनुत्तरं पदम्॥ इति।

एवं मृदुमध्याधिमात्रभेदेन वयसानुरूपेण पक्षाद्वा मासाद्वा यावत् षण्मासाद्वाऽभ्यस्यमानस्य महामुद्रासिद्धिनिमित्तमुपजायते। तत्रेदं निमित्तम्—

सूक्ष्मरूपं लघुस्पर्शं व्याप्तिसम्प्राप्तमेव च।
प्रकाशं चैव स्थैर्यं च वशित्वं कामावसानिकम्॥ इति।

## महालक्ष्मीसाधन

( 1 )

[1]यत्तदव्यक्तरूपं तु सर्वदेहे व्यवस्थितम्।
गुरुवक्त्रात् परं तत्त्वं प्राप्यते नात्र संशयः॥
आचार्याद् गुरुतरो नास्ति त्रैलोक्ये सचराचरे।
यस्य प्रसादात् प्राप्यन्ते सिद्धयोऽनेकधा बुधैः॥

## मूलसूत्र

( 1 )

[2]सर्वदेवोपभोगैस्तु सेव्यमानो यथासुखम्।
स्वाधिदैवतयोगेन स्वमात्मानं प्रपूजयेत्॥

---

1. सुभाषितसंग्रह, पृ० 5-6
2. सुभाषितसंग्रह, पृ० 81

## यमान्तकतन्त्र

( 1 )

[1]ध्वजवीथीं ततो दृष्ट्वा क्षीरं तत्र प्रसाधयेत् ।
क्षीराभ्यासयोगेन महामुद्रापि सिद्ध्यति ॥

## वज्रडाकतन्त्र

( 5 )

[2]गुरोश्छायां च पत्नीं च पादुकासनतल्पकम् ।
लङ्घयन्ति महामोहात् ते नराः क्षुरधारिणः ॥
सुशिक्तो(क्षो)ऽपि यदा शिष्यो गुरोराज्ञां विलङ्घयेत् ।
इह लोके भवेत् कल्लः परलोके नरके वसेत् ॥
मायाशाठ्यप्रयोगेण मिथ्याभक्तिप्रकाशनात् ।
क्षयकुष्ठमहारोगी जायते नरकादिषु ॥
एवं मत्वा ततः शिष्या गुरोर्भक्तिपरायणाः ।
सिद्ध्यन्ते विपुलां सिद्धिं गुरोराज्ञाप्रपालनात् ॥

## विलासवज्रपाद

( 1 )

[3]संक्षेपतो बोधिचित्तरूपं निष्पादयितव्यम् । पूर्वमहं मातापितृसमायोगाज्जातः । तद् बीजम् । तत्रैवाहं निष्पन्नः । तस्मात् सिद्धोऽहं केवलं स्मर्तव्यम् ।

## शाक्यमित्रपाद

( 1 )

[4]यथाग्निदारुमध्यस्थो नोत्तिष्ठेन्मथनाद् विना ।
तथाभ्यासाद् विना बोधिर्जायते नेह जन्मनि ॥

---

1. सुभाषितसंग्रह, पृ० 74
2. सुभाषितसंग्रह, पृ० 8-9; गुह्यसमयसाधनसंग्रह ( पृ० 267 ) में ये श्लोक वज्रपञ्जरतन्त्र के बताये गये हैं । देखिये - धीः, अंक 3, पृ० 43-44
3. सुभाषितसंग्रह, पृ० 66-67; इस उद्धरण के तत्काल बाद यहाँ सर्वदेवसमागमतन्त्र उद्धृत है । उससे ऐसा लगता है कि विलासवज्र ने सर्वदेवसमागमतन्त्र की व्याख्या लिखी है और उसी का यह उद्धरण है ।
4. सुभाषितसंग्रह, पृ० 91

## सप्तशतिका (प्रज्ञापारमिता)

( 1 )

[1]योऽनुपलम्भः सर्वधर्माणां सा प्रज्ञापारमिता ।

तथा—

आश्रयस्य परावृत्तिः सर्वसंकल्पवर्जिता ।
ज्ञानं लोकोत्तरं चैतद् धर्मकायो महामुनेः ॥
वज्रं तद् वज्रसत्त्वोऽसौ बुद्धो बोधिरनुत्तरा ।
सर्वायोगातियोगानामयं योगो निरुत्तरः ॥
एष मुख्यतमो योगस्तत्त्वसंग्रहनिश्चये ।
महासमयतत्त्वे च श्रीमद्वज्राभिशेखरे ॥
महामायातिसमये श्रीमद्बुद्धसमागमे ।
परमाद्ये महातन्त्रे श्रीमद्वज्रमहासुखे ॥
श्रीसमाज[महा]तन्त्रे चायं योगी निरुत्तरः ।
कथितश्चित्तवज्रेण सर्वसिद्धिप्रसाधकः ॥
येऽत्रातीतविपर्यासा भवन्ति जिनसूनवः ।
ते भवन्त्यचिरादेव त्रैलोक्यगुरवो जिनाः ॥ इति ।

## समयवज्रपाद

( 2 )

[2]वक्तुरन्तःस्फुरत् तत्त्वं श्रोता साक्षान्न बुध्यति ।
समुदेति किमप्यस्य विकल्पप्रतिबिम्बकम् ॥
स्वविकल्पशतैस्तैस्तैः कल्पयंस्तत्त्वभावनाम् ।
स्वविकल्पाकलसन्तानः कस्तत्त्वमवभोत्स्यते ॥
[3]यस्तु वज्रनयोपायपवित्रीकृतमानसः ।
स्फुटीकृतस्वसंवेद्यधर्मकायो महासुखः ॥
अथ सामर्थ्यसम्प्राप्तो वज्रत्रितयनिर्वृतः ।
साक्षान्नैरात्म्यसंवित्तिसमुच्छिन्नभवभ्रमः ॥

1. सुभाषितसंग्रह, पृ० 93-94
2. सुभाषितसंग्रह, पृ० 44-47
3, धीः, अंक 2, पृ० 60 देखिये ।

स्वमन्त्रपूततत्त्वज्ञः सुलभोपायसम्पदः ।
[1]तस्य वज्रधरस्येह सिद्धिः करतले स्थिता ॥
कुलानुरूपमथवा यथालाभं शुभाशयम् ।
योग्यां समयशिक्षादौ महामन्त्रनयाश्रये ॥
यां काञ्चिदथवा प्राप्य सरसां नवयौवनाम् ।
अशठामकुटिलां चैव प्रियोक्त्याभिमुखीकृताम् ॥
परिरम्भरसास्वादप्रमुखैः परिकर्मभिः ।
विद्यां विदध्याद् विजने प्राक्प्रबुद्धमनोभवाम् ॥
तर्जनीमध्यमान्तस्थां पीडितकृष्टकर्णिकाम् ।
महीस्थलभालाभां तु मदनाह्लादितां तथा ॥
पूर्णेन्दौ रसनास्थले विकसत्कमलाकृतिम् ।
प्राप्य तां परमां कोटिं·········दसम्पदः ॥
सुन्दरराशितारुण्यभद्रालसं वितन्वतीम् ।
साधनाहतसंमर्दानन्दपरमां नयेत् ॥
तां विलोक्य मनोहारी सदा घूर्णितलोचनाम् ।
तथागतमयं चेतःस्तम्भं कृत्वानुरागयेत् ॥
यथा···· ख शीतानदंशन····दियत् ।
मुहुर्विद्याधराङ्कारदानध्वनितनन्दितः ॥
परिरम्भरसाक्रान्तललनालालनोद्यतः ।
समाह्लादितसन्तानललित···· कनैः ॥
इत्थं य················द्वयेद् वलाम् ।
लीलावत्या रसोल्लासं सन्ततानन्दसिद्धये ॥
व्योमधातुर्ध्वजासङ्गादानन्दस्पन्दसम्पदा ।
संविदानन्दसंदोहस्पन्दिनी समुदेडि(ति) या ॥
तामुदारमनस्कारस्फारसंस्कृतसन्ततैः ।
सततं भावयन्नेवमनुज्ञां बोधिमानसः ॥
क्षणं क्षणरुचिप्रख्यं मण्यन्तर(र्) लक्षयेत् स्फुटम् ।
भावयेदवधानेन क्षीणनिःशेषकल्मषम् ॥

---

1. धीः, अंक 2, पृ० 60 देखिये ।

सर्वावस्थास्वसंवेद्याः साक्षाद् बुद्धत्वसम्पदः ।
विद्याकमलसंकल्पः सावधानैरवाप्यते ॥
तत्प्रकर्षपदप्राप्तो वज्रत्रितयनिर्वृतिः ।
विशुद्धं धर्मकायत्वं लभते योगिपुङ्गवः ॥
प्रागस्मात् कुलिशाम्भोजं पा''जभूतयत्सुखम् ।
स्फुटं तद्भावनाभ्यासादेतदायाति लक्षताम् ॥

## सरहपाद[1]

( 8 )

[2]ग्राह्यग्राहक[वि]निर्मुक्तं विज्ञानं परमार्थसत् ।
योगाचारमताम्बोधिपारगैरिति गीयते ॥
नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् ।
एकानेकस्वभावेन वियोगाद् गगनाब्जवत् ॥
न सन्नासन् न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

( 9 )

[3]वस्तून्यमूनि सकलान्येकानेकस्वभावविकलानीत्यासङ्गवियोगादुद्योगी योगितामेति ।
का तृष्णा कुत्र सा तृष्णा मृग्यमाणा विचारतः ।
विचारे जीवलोकस्य को नामाऽत्र मरिष्यति ॥
को भविष्यति को भूतः को बन्धुः कस्य कः सुहृत् ।
सर्वमाकाशसंकाशं प्रतिगृह्णन्तु मद्विधाः ॥

( 10 )

[4]स श्रीमान् कुलिशायुधः सुखमयो यासु स्फुरन् गृह्यते
यासामाकृतिरप्रपञ्चविमला प्रज्ञामयी सर्वगा ।
साक्षात् कल्पलता इव त्रिभुवने या क्लेशजालच्छिदः
श्रीमद्वज्रपदाङ्किता युवतयस्ताभ्यो नमः सर्वदा ॥

1. सुभाषितसंग्रह के सम्पादक ने सरह को राहुलभद्र से अभिन्न माना है ( पृ० 271 ) ।
2. सुभाषितसंग्रह, पृ० 17
3. ,, पृ० 27
4. ,, पृ० 47-48

यासां स्मरन्नपि जनः कुलिशाङ्गनेति
निःक्लेशकेवलरसां सुखमेति भूमिम् ।
तत्पादपङ्कजरसां शिरसा नमामि
निर्वंधभक्तिभरबन्धुरकन्धरेण ॥

( 11 )

[1]अहो गाढालोके परिचितिरियं विभ्रमविधौ
भवादन्यो मोक्षः पृथगिति तमेनं मृगयते ।
अभूमिश्चेद् दृष्टः सदसदसदाग्राहतमसां
इदन्तातीतं च त्रिजगदिति भेदः कथमयम् ॥
यद्यच्छृणोति पश्यति जिघ्रत्यश्नाति वेत्ति संस्पृशति ।
गम्भीरोदारतया तदवेहि समन्तभद्राभम् ॥
एता एव हि ता अवेहि वनिताः श्रीवज्रमारीगणै-
रेतानेव हि तानवेहि पुरुषांश्छ्रीमाण्डलेयानपि ।
एतामेव हि तामवेहि महतीं श्रीवज्रिणः स्वां तनू-
मेवं ते प्रकृतिप्रभास्वरमिदं सिद्धं जगन्नाटकम् ॥

शास्तेति शिष्य इति दुःखसुखं तथेति
जन्मेति नाश इति कर्मफलं तथेति ।
किं विस्तरेण भुवनत्रयमेव तस्य
लीलायितं भगवतः सुरतेश्वरस्य ॥

## सर्वदेवसमागमतन्त्र

( 1 )

[2]यस्तु सर्वाणि कार्याणि प्रज्ञाया विनियोजयेत् ।
सापि शून्यपदे योज्या तपो ह्येतन्महात्मनाम् ॥

---

1. सुभाषितसंग्रह, पृ० 74-76; ये श्लोक सरहपाद के प्रबन्ध नामक ग्रन्थ के बताये गये हैं। सरहपाद के इस ग्रन्थ का उल्लेख और उसका एक श्लोक चर्यागीतिकोश की व्याख्या ( पृ० 4 ) में भी उद्धृत हुआ है । यहाँ का पहला श्लोक अपभ्रंश भाषा का है ।
2. सुभाषितसंग्रह, पृ० 67

( 2 )

[1]द्वयेन्द्रियसमापत्त्या ध्येयः स विधिरन्तरे।
हर्षचित्तं मुनेः सिद्धौ महासुखमिति स्मृतम् ॥

## सर्वरहस्यतन्त्र

( 1 )

[2]ये तु नैरात्म्यसम्भूता अद्वयज्ञानसम्भवाः।
इष्टानिष्टविनिर्मुक्ता न किञ्चित् प्रणमन्ति ते ॥



1. सुभाषितसंग्रह, पृ० 82
2. „ पृ० 85-86

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। प्रथम दो अंकों में प्रधानतः सेकोद्देशटीका तथा अद्वयवज्रसंग्रह से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संकलित की गयी थी। तृतीय अंक में साधनमाला, तत्त्वज्ञानसंसिद्धिटीका, दोहाकोशव्याख्या और चर्याकोशव्याख्या से सामग्री संगृहीत हुई। इस अंक में इसी योजना से निकट भविष्य में प्रकाशित हो रहे गुह्यादि-अष्टसिद्धिसंग्रह में प्रदत्त पारिभाषिक व्याख्याएँ संगृहीत की जा रही हैं। ]

**अक्षोभ्यः**

सर्वानिष्टजनैर्ज्ञानं मिथ्यागुरुजनैरपि।
अप्रकम्प्यस्वभावत्वादक्षोभ्योऽसौ प्रकथ्यते ॥ ( ज्ञा० सि० 15.6 )
अक्षोभ्यो वज्रमित्युक्तम् ( स० सि० 2.6 )

**अङ्गचतुष्टयम्**

चत्वार्यङ्गानि—सेवा-उपसेवा-साधन-महासाधनाश्चेति। ( हे० त० 1.1. 25 )

**अद्वयम्**

परमार्थोऽद्वयमुच्यते। ( अ० क्र० 4 )

यस्य स्वभावो नोत्पत्तिर्विनाशो नैव विद्यते।
तज्ज्ञानमद्वयं नाम सर्वसंकल्पवर्जितम् ॥
( अ० क्र० 12-13 )

सर्वशङ्काविनिर्मुक्तं निर्द्वन्द्वं परमं शिवम्।
खसमं कल्पनामुक्तमद्वयं तु तदुच्यते ॥
( अ० क्र० 17-18 )

अद्वयज्ञानमेकं तु सर्वसंकल्पवर्जितम्। ( अ० क्र० 26 )

कल्पनाजालविच्छिन्नमचिन्त्याद्वयमुत्तमम्। ( अ० क्र० 28 )

रूपशब्दरसातीतं गन्धस्पर्शादिवर्जितम् ॥
धर्मधातुमयं शुद्धमद्वयं ज्ञानमुत्तमम्।

सर्वसंकल्पनिर्मुक्तं ग्राह्यग्राहकवर्जितम् ॥
स्वभावशुद्धं निलयमद्वयं पारमार्थिकम् ।
अविनाशमनुत्पत्तिमनक्षरमनालयम् ॥
महामुद्रेयमत्यन्तमद्वयं ज्ञानमुत्तमम् ।
( अ० क्र० 30-3 3 )

आदिमध्यान्तरहितं निष्पन्नोत्पत्तिवर्जितम् ।
त्यक्तं चित्तं च चैतन्यं तदद्वयज्ञानमुत्तमम् ॥
( अ० क्र० 51-52 )

परमार्थोऽद्वयो नाम ( अ० क्र० 78 )

सर्वं तु चाद्वयज्ञानं दृश्यते प्रतिभासतः ।
अद्वयः करुणामिश्रः प्रज्ञोपायसमन्वितः ॥
( अ० क्र० 93 )

अनादिरद्वयो नाम श्री सुखाकारसंस्थितः । ( अ० क्र० 118 )

**अभिषिक्तः**

सर्वंताथागतं ज्ञानं वज्रज्ञानमिति स्मृतम् ।
तेनाभिषिक्तो मतिमानभिषिक्तोऽभिधीयते ॥ ( ज्ञा० सि० 1.37 )

**अमिताभः**

अप्रतिष्ठितनिर्वाणमलिप्तं भवनिर्वृतौ ।
असंख्यगुणसंयोगादमिताभः स उच्यते ॥ ( ज्ञा० सि० 15.8 )
अमिताभः पद्ममेव च ( स० सि० 2.7 ) ।

**अमोघसिद्धिः**

सर्वसत्त्वार्थकार्याणां प्रसाधकतमः स्वयम् ।
अवन्ध्यं तन्महाज्ञानममोघसिद्धिरुच्यते ॥ ( ज्ञा० सि० 15.9 )
अमोघः कर्म इत्युक्तं कुलान्येतानि संक्षिपेत् । ( स० सि० 2.8 )

**आचार्यः**

आचार्यात् परमं नास्ति रत्नभूतं त्रिधातुके ।
अस्य प्रसादात् प्राप्यन्ते सिद्धयोऽनेकधा बुधैः ॥
( गु० सि० 9.11 )

आचार्यात् परतरं नास्ति त्रैलोक्ये सचराचरे ।
यस्य प्रसादात् प्राप्यन्ते सिद्धयोऽनेकधा बुधैः ॥
वज्रसत्त्वः स वै ज्ञेयः सर्वबुद्धैर्नमस्कृतः ।
आचार्यः परमो देवः पूजनीयः प्रयत्नतः ॥
स एव तथतारूपी लोकानुग्रहहेतुना ।
रूपमाश्रित्य संवृत्या संस्थितो योगपीठके ॥
( अ० सि० 33-35 )

आराद् दूरं पापकेभ्यो धर्मेभ्यश्चरतीत्याचार्यः ।
( हे० त० टी०, प० 7a )

**आत्मदेवता**

तस्मादात्मैव देवता । ( प्र० वि० सि० 5.33 )
स्वाधिदैवतयोगेन स्वमात्मानं प्रपूजयेत् । ( ज्ञा० सि०, पृ० 144 )

**आनन्दचतुष्टयम्**

चत्वार आनन्दाः—आनन्दः, परमानन्दः, विरमानन्दः, सहजानन्दश्चेति । (हे० त० 1.1.28)

**आर्यसत्यचतुष्टयम्**

चतुरार्यसत्यानि—दुःख-समुदय-निरोध-मार्गाश्चेति । ( हे० त० 1.1.26 )

**आलिः**

अकारादिषोडशस्वरा आलिः । ( हे० त० टी०, प० 6a )
आलिर्वामनासापुटप्रभवो वायुः । ( हे० त० टी०, प० 9b )

**आलिकाली**

ते एव ललनारसने चन्द्रसूर्यौ प्रज्ञोपायौ । ( हे० त० टी०, प० 6a )

**उत्तमम्**

यस्य यद् दुष्परित्याज्यं तदुत्तममिति स्मृतम् । ( ज्ञा० सि० 17.15 )

**उत्पलम्**

उत्पलं प्लवनात् ततः । ( ज्ञा० सि० 15.25 ) ।

**उपायः**

उपानयत्यभिमतं यन्नौकेवानुकूलतः ।
सदानुकूल्ययोगेन सैवोपायः प्रकीर्तितः ॥ ( प्र० वि० सि० 1.16 )
उपायः पुरुषः स्मृतः ( स० सि० 1.6 )

उपायोऽपि चतुर्विधो बोधिवज्रेण वर्णितः।....
सेवाविधानं प्रथमं द्वितीयमुपसाधनम्।
साधनं तृतीयं चैव महासाधनं चतुर्थमिति॥....
प्रथमं शून्यताबोधिर्द्वितीयं वज्रसंहृतिः।
तृतीयं बिम्बनिष्पत्तिश्चतुर्थं न्यासमक्षरम्॥
एभिर्वज्रचतुष्केण ज्ञाननिष्पत्तिरुच्यते।
(अ० प्र० वि० सि०, पृ० 211)

भावलक्षण उपायः।....स्वभावलक्षण उपायः। (अ० प्र० वि० सि०, पृ० 212)

उपाय इत्यनेन शब्देन कोऽर्थो भण्यते? श्रीवज्रसत्त्वः संसारभूतः करुणास्वभावः स्थिर-वस्तुस्वभावमूर्तिरुपायशब्देनोक्त इति। उपायः श्रीवज्रसत्त्व इति उपायोऽपि श्रीवज्रसत्त्वः सर्वभावस्वभावः। (अ० प्र० वि० सि०, पृ० 216-217)

**एवं मया**

एकारेण लोचनादेवी वंकारेण मामकी स्मृता।
मकारेण पाण्डुरा च याकारेण तारणी स्मृता॥
(हे० त० 1.1.22)

एकारं भगमित्युक्तं वंकारं कुलिशं स्मृतम्।
मयेति चलनं प्रोक्तं वज्रधरस्य लक्षणम्॥
(हे० त० टी०, प० 2a)

एकारः पृथिवी ज्ञेया कर्ममुद्रा तु लोचना।
चतुष्षष्टिदले नाड्यः स्थिता निर्माणचक्रके॥
वंकारस्तु जलं ज्ञेयं धर्ममुद्रा तु मामकी।
संस्थिता धर्मचक्रे तु हृदि वाष्टदलाम्बुजे॥
मकारं वह्निरुद्दिष्टं महामुद्रा च पाण्डरा।
स्थिता संभोगचक्रे तु कण्ठे द्वयष्टदलाम्बुजे॥
याकारो मारुतः प्रोक्तो मुद्रा समयतारिणी।
स्थिता महासुखचक्रे द्वात्रिंशद्दलपङ्कजे॥
(हे० त० टी०, प० 2b)

**करुणा**

करुणा नाम सर्वसत्त्वान् अस्मिन्नेव ज्ञानराजे प्रतिष्ठापयिष्यामि, सर्वसुखोपधानैश्च परिवारयिष्यामीति सम्यगाशयः। ( ज्ञा० सि०, पृ० 135 )

**कर्म**

अमोघः कर्म इत्युक्तम् ( स० सि० 2.8 )।

**कायः**

संस्कारो वेदना संज्ञा रूपं विज्ञानमेव च।
पञ्चज्ञानमयः कायः पञ्चबुद्धोऽद्वयोत्तमः॥ ( अ० क्र० 73 )

**कालिः**

ककारादिचतुस्त्रिंशद्व्यञ्जनानि कालिः। ( हे० त० टी०, प० 6a )
आलिर्वामनासापुटप्रभवो वायुः। तदपरः कालिः। (हे० त० टी०, प० 9b )

**कृपा**

चिन्तामणिरिवाशेषसत्त्वार्थकरणं कृपा। ( प्र० वि० सि० 4.10 )

**कौलिकम्**

कौलिकं तदनुत्तरम् ( प्र० वि० सि० 1.23 )।

**क्रमद्वयम्**

श्रुतं सहजमित्युक्तं द्विधाभेदेन भेदितम्।
सांवृतं देवताकारमुत्पत्तिक्रमपक्षतः॥
विवृतिसुखरूपं तु निष्पन्नक्रमपक्षतः।
सत्यद्वयं समाश्रित्य बुद्धानां धर्मदेशना॥
( हे० त० टी०, प० 2b )
उत्पत्तिक्रमपक्षं च उत्पन्नक्रममेव च।
क्रमद्वयमुपादाय देशना वज्रधारिणाम्॥
( हे० त० टी०, प० 2b )

**क्षणचतुष्टयम्**

चत्वारः क्षणाः—विचित्रविपाकविमर्दविलक्षणाश्चेति। ( हे० त० 1.1.24 )

**खड्गः**

खड्गः क्लेशारिसंच्छेदात् ( ज्ञा० सि० 15.25 )

**खधातुः**

एतत्तत्त्वं परं शान्तं खधात्वाख्यं व्यवस्थितम् ।
वज्रपद्मसमावेशात् सम्प्रदायाच्च लभ्यते ॥ ( गु० सि० 3.26 )

**गुरुः**

पर्युपास्यो जगन्नाथो गुरुः सर्वार्थसिद्धिदः ।
( प्र० वि० सि० 2.26 )

गुरुर्बुद्धो भवेद् धर्मः संघश्चापि स एव हि ।
प्रसादाज्ज्ञायते तस्य यस्य रत्नत्रयं वरम् ॥
अज्ञानतिमिरान्धानामेष मार्गप्रदर्शकः ।
( ज्ञा० सि० 1.24-25 )

अद्वयः करुणामिश्रः प्रज्ञोपायसमन्वितः ।
शून्यताभेदभिन्नस्तु सर्वबुद्धमयो गुरुः ॥
( अ० क्र० 93-94 )

**गुह्यसिद्धिः**

विरुद्धसमयादीनि गुह्यसिद्धिरिति स्मृता । ( गु० सि० 6.103 )

**घण्टा**

प्रज्ञा घण्टाऽभिधीयते । ( ज्ञा० सि० 15.24 )

**चक्रम्**

चक्रमज्ञानच्छेदाच्च ( ज्ञा० सि० 15.24 )

**चक्रचतुष्टयम्**

निर्माणचक्रे पद्मं चतुष्षष्टिदलम् । धर्मचक्रेऽष्टदलम् । संभोगचक्रे षोडशदलम् । महासुखचक्रे द्वात्रिंशद्दलम् । ( हे० त० 1.1.23 )

धर्मचक्रं संभोगचक्रं निर्वाणचक्रं हृत्कण्ठयोनिषु यथाक्रमम् । कायवाक्चित्त इति तदेव चक्रत्रयम् । कायचक्रं योनौ । वाक्चक्रं कण्ठे । चित्तचक्रं हृदि । त्रयाणां परिज्ञानस्वभावं महासुखचक्रं मूर्धनि विज्ञातव्यम् । एष्वेव चक्रचतुष्टयेषु पृथ्व्यप्तेजोवायुधातुस्वभावाश्चतस्रो मुद्रा एवंमयाख्याः । ( हे० त० टी०, प० 6a-6b )

**चण्डाली**

चण्डाली ज्वलिता नाभौ दहति पञ्चतथागतान् ।
दहति च लोचनादिर्दग्धेऽहं स्रवते शशी ॥ ( हे० त० 1.1.31 )

चण्डा प्रज्ञा क्लेशोपक्लेशनिकृन्तने चण्डस्वभावत्वादालिर्वज्रसत्त्वश्चण्डालीशब्देनोच्यते ।

( हे० त० टी०, प० 9b)

चण्डा प्रज्ञा अँकारः । आलिर्वज्रसत्त्वो हँकारः । अँकारहँकारौ चण्डाली ।

( हे० त० टी०, प० 10a )

चण्डा धर्मोदया रक्ता आलिश्चाद्यक्षरः स्मृतः । ( हे० त० टी०, प० 10a )

चण्डा प्रज्ञा वामनाडी आलिरूपा, उपायो दक्षिणनाडी । ते द्वे गुरूपदेशतः संयोगं गते चण्डालीत्युच्यते ( हे० त० टी०, प० 10a )

चण्डा प्रज्ञा उत्पत्त्युत्पन्नक्रमसमाधीनां विचारः । आलिर्महाकरुणामयचित्तम् । अतः शून्यताकरुणे चण्डालीशब्देनोच्येते । ( हे० त० टी०, प० 10b )

चण्डाली निरुत्तरप्रज्ञा ( हे० त० टी०, प० 10b )

**चर्या**

पुण्यज्ञानेन शौचेन स्वसंवेद्यसुखेन च ।
स्वसंवेद्यात्मिका शुद्धिर्नान्यशुद्धया विमुच्यते ॥
वैद्यौषधिप्रवृत्त्या तु चर्या सेति निदर्शिता ।
सेवया सेवकानां तु चरणं चर्येति सा स्मृता ॥ ( स० सि० 3-4 )

**चित्तम्**

अनल्पसंकल्पतमोऽभिभूतं प्रभञ्जनोन्मत्ततडिच्चलं च ।
रागादिदुर्वारमलावलिप्तं चित्तं हि संसारमुवाच वज्री ॥

( प्र० वि० सि० 4.22 )

चित्तेन न विना कायः किञ्चित् कर्तुं भवेत् क्षमः ।
वचनं च विना तेन भवेन्नैव कदाचन ॥ ( ज्ञा० सि० 9.6 )
चित्तेनैव जगत् सर्वं क्रियते यच्छुभाशुभम् । ( ज्ञा० सि० 9.7 )
चित्तेन भाव्यते यत्तत् तदेव तु निरीक्ष्यते । ( ज्ञा० सि० 12.16 )
स्वच्छं हि सर्वसत्त्वानां चित्तं शान्तं प्रभास्वरम् । (ज्ञा० सि० पृ० 141 )
दोषाणां च गुणानां च चित्तमाधारमुच्यते । ( अ० क्र० 33 )

**ज्ञानसत्वः**

प्रज्ञाज्ञानसमायोगाज्ज्ञानसत्त्वस्तथागतः । ( हे० त० 1.1.5 )

**तत्त्वचतुष्टयम्**

चत्वारि तत्त्वानि—आत्मतत्त्वं मन्त्रतत्त्वं देवतातत्त्वं ज्ञानतत्त्वं चेति । ( हे० त० 1.1.27 )

**तन्त्रम्**

तन्त्रमिति प्रबन्धः। तच्च त्रिधा—हेतुतन्त्रम्, फलतन्त्रम्, उपायतन्त्रं च।

( हे० त० टी०, प० 4a )

**तारा**

महाकरुणया नित्यं जगदुद्धरणाशयम्।
सत्त्वोत्तारणदक्षत्वात् ताराज्ञानं प्रकाशितम्॥ ( ज्ञा० सि० 15.13 )

**दण्डज्ञानम्**

दण्डेन शासनाद् दण्डज्ञानं तत् सत्त्वशासकम्। ( ज्ञा० सि० 15.27 )

**धर्मतत्त्वम्**

प्रक्षेप्तुं चापनेतुं च शक्यते यत्र नैव हि।
प्रक्षेपाय च यत् त्यक्तं धर्मतत्त्वं तदुच्यते॥

( प्र० वि० सि० 1.18; अ० प्र० वि० सि०, पृ० 214 )

**धर्मधातुः**

तदेव सर्वबुद्धानामालयं परमाद्भुतम्।
श्रेयःसम्पत्करं दिव्यं धर्मधातुः प्रकीर्तितम्॥ ( प्र० वि० सि० 1.21 )

तथता, भूतकोटिः, धर्मधातुरित्यनर्थान्तरम्। ( हे० त० टी०, प० 8a )

**धर्मोदयः**

त्रिकोणाकारसंभूता धर्मोदय इति स्मृता।
चन्द्रार्कवारिसम्पूर्णा प्रज्ञारूपा महोज्ज्वला॥ ( अ० क्र० 98 )

**धर्मोदया**

आकाशस्वभावां धर्मोदयामेकाराकारामधःसूक्ष्माग्रामुपरि विशालां शुक्लां विभावयेत्।

( सा० मा०, पृ० 195 )

**नाडी**

द्वात्रिंशन्नाड्यः। द्वात्रिंशद् बोधिचित्तावहा महासुखस्थाने स्रवन्ते। तासां मध्ये तिस्रो नाड्यः प्रधानाः—ललना, रसना, अवधूती चेति।

ललना प्रज्ञास्वभावेन रसनोपायसंस्थिता।
अवधूती मध्यदेशे ग्राह्यग्राहकवर्जिता॥
अक्षोभ्यावहा ललना रसना रक्तवाहिनी।
प्रज्ञाचन्द्रावहा ख्याताऽवधूती सा प्रकीर्तिता॥ ( हे० त० 1.1.13-15 )

बोधिचित्तावहा इति सहजवाहिन्यः। ( हे० त० टी०, प० 5b )

**निकायचतुष्टयम्**

चत्वारो निकायाः—स्थावरी, सर्वास्तिवादी, संविदी, महासंघी चेति । ( हे० त० 1.1.29 )

निकायो भिक्षुसंघः ( हे० त० टी०, प० 9a )

**पञ्चामृतम्**

पञ्चामृतेनेति दधि-दुग्ध-घृत-गोमूत्र-गोमयैः । ( हे० त० टी०, प० 11a-11b )

पञ्चामृतेनेत्याध्यात्मिकेन ( हे० त० टी०, प० 11b )

**पद्मम्**

भवदोषैरलिप्तत्वाज्ज्ञानं तत् पद्ममुच्यते । ( ज्ञा० सि० 15.25 )

एकारं पद्ममित्युक्तम् । ( अ० प्र० वि० सि०, पृ० 218 )

**पद्मान्तकः**

जगदाह्लादनं सर्वं नातिगृह्णन् विचारयन् ।

भवेष्वलिप्तसम्बोधिस्तेन पद्मान्तकः स्मृतः ॥ ( ज्ञा० सि० 15.17 )

**प्रज्ञा**

परामर्षणयोगेन धर्माणां निःस्वभावता ।

ज्ञानज्ञेयविभागेन प्रज्ञातत्त्वं तदुच्यते ॥ ( प्र० वि० सि० 1.14 )

विसतन्तुसमाकारा अध ऊर्ध्वं व्यवस्थिता ।

प्रज्ञा नामेति विख्याता सर्वबुद्धैस्तु मातरः ॥ (अ० क्र० 108-109)

धर्मतोऽप्रविचयलक्षणा श्रुतचिन्ताभावनामयी द्विविधा प्रज्ञा—प्रत्यवेक्षणा नैर्वेधिकी चेति । प्रति प्रति प्रत्यवेक्षते अन्विष्यते ज्ञायते चक्षुर्वज्रेण गृह्यते सा प्रत्यवेक्षणा प्रज्ञा । नैर्वेधिकी निर्विद्धयतेऽनया प्रत्यवेक्षणा सा नैर्वेधिकी प्रज्ञा । ( अ० प्र० वि० सि०, पृ० 211 )

अभावलक्षणा प्रज्ञा ।.....निःस्वभावलक्षणा प्रज्ञा । ( अ० प्र० वि० सि०, पृ० 212 )

प्रज्ञा पद्मं विधीयते ।.....तेन पद्मस्वभावेन लोचना-मामकी-पाण्डरा-तारा-समन्तभद्रापञ्चदेवी-शून्यतास्वभावा प्रज्ञास्वभावेनोक्ता । ( अ० प्र० वि० सि०, पृ० 216 )

**प्रज्ञान्तकः**

मिथ्याज्ञानं निवार्याशु मूढसत्त्वप्रकाशितम् ।

सम्यग्ज्ञानप्रकृष्टात्मयोगात् प्रज्ञान्तकः स्मृतः ॥ ( ज्ञा० सि० 15.16 )

**प्रज्ञापारमिता**

या च समन्तभद्रा देवती शून्यतारूपात्मिका, सा प्रज्ञापारमिता चतुर्देवीज्ञानात्मिका, स्फारणसंहरणस्वभावेन व्यवस्थिता श्रीमहावैरोचनाकारज्ञानपरिणतस्वभावा समन्तभद्रा

प्रज्ञापारमिताशब्देनोक्ता।....या समन्तभद्रा प्रज्ञापारमिता साऽभावरूपा आकाशलक्षणत्वेन शून्यताकारा विविक्ता प्रकृतिप्रभास्वरा ज्ञानज्ञेयरहिता निःस्वभावलक्षणा धर्मकायपरिणता सती वैनेयजनं प्रति सा व्यवस्थिता सती निर्माणादिकं प्रतिभासयति।

( अ० प्र० वि० सि०, पृ० 216 )

**प्रज्ञोपायः**

उभयोर्मेलनं यच्च सलिलक्षीरयोरिव।
अद्वयाकारयोगेन प्रज्ञोपायः स उच्यते॥ ( प्र० वि० सि० 1.17 )

न केवलप्रज्ञामात्रेण बुद्धत्वं भवति, नाप्युपायमात्रेण, किन्तु यदि पुनः प्रज्ञोपायलक्षणौ समतास्वभावौ भवतः, एतौ द्वावभिन्नरूपौ भवतः, तदा भुक्तिर्मुक्तिश्च भवतीति। तथा चोक्तम्—

उपानयत्यभिमतं यस्मान्नौकेवानुकूल्यतः।
तदानुकूल्ययोगेन सैवोपायः प्रकीर्तितः॥

( अ० प्र० वि० सि०, पृ० 214 )

प्रज्ञया उपायः प्रज्ञोपाय इति, प्रज्ञाजनित उपाय इत्यर्थः ( अ० प्र० वि० वि०, पृ० 216 )

**बुद्धः**

वासनाक्षयजातेन ह्यद्वयो बुद्ध उच्यते ( अ० क्र० 58 )

**बोधिसत्त्वः**

बोधिचर्यासमासेन बोधिसत्त्वो निगद्यते। ( हे० त० 1.1.5 )

**बौद्धं ज्ञानम्**

रूपाद्यायतनादीनि प्रभुज्यन्ते स्वयं यतः।
षड्भुजं कथ्यते तेन ज्ञानं बौद्धं तथागतैः॥ ( ज्ञा० सि० 15.23 )

**भगम्**

हृदयं ज्ञानं....तदेव भगम्, सर्वक्लेशभञ्जनात्। ( ज्ञा० सि०, पृ० 139 )

**भवः**

अभूतकल्पसम्भूतो भावसंकल्पनात्मकः।
भवः स एव चाख्यातो बालव्यामोहको बुधैः॥ ( प्र० वि० सि० 1.3 )

**भगवान्**

भगा ऐश्वर्यादयो गुणा विद्यन्ते यस्य स भगवान्। तथा चोक्तम्—

ऐश्वर्यस्य समग्रस्य ज्ञानस्य यशसः श्रियः।
रूपस्यार्थपर्यन्तस्य षण्णां भगमिति श्रुतम्॥ ( हे० त० टी०, प० 1b )

**मण्डलम्**

सर्वाङ्गभावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राबिन्दुसमातीतमेतन्मण्डलमुत्तमम् ॥ ( ज्ञा॰ सि॰ पृ॰ 141 )

**मण्डलवासिनी**

सर्वदोषहरं ज्ञानं सर्वताथागतं परम् ।
मण्डलवासिनी ख्याता सर्वसंशोधनोद्यतम् ॥ ( ज्ञा॰ सि॰ 15.12 )

**मन्त्रः**

परमार्थमननात् जगत्त्राणाच्च मन्त्रः। पारमार्थिकबोधिचित्तं मन्त्रः, मन्त्रनिष्यन्दत्वात् ॥
( हे॰ त॰ टी॰, प॰ 11a )

**महासत्त्वः**

महाज्ञानरसैः पूर्णो महासत्त्वो निगद्यते । ( हे॰ त॰ 1.1.5 )

**महासुखम्**

अनन्तसुखरूपत्वात् श्रीमहासुखसंज्ञितम् । ( प्र॰ वि॰ सि॰ 1.27 )

**मामकी**

सर्वताथागतं ज्ञानमात्मीयं मामकं मतम् ।
अन्योन्यव्यापकादेव मामकी तेन तत्स्मृतम् ॥ ( ज्ञा॰ सि॰ 15.11 )

**मुद्गरम्**

संसारजलनिमग्नैर्यस्माज्ज्ञानं न ज्ञायते ।
बुद्धानुगानां सत्त्वानां ताडनाद् मुद्गरं स्मृतम् ॥ ( ज्ञा॰ सि॰ 15.26 )

**यमान्तकः**

मरणादिभयान्मुक्तं सर्वताथागतं परम् ।
प्रकृष्टं दमनज्ञानं ततो यमान्तकः स्मृतः ॥ ( ज्ञा॰ सि॰ 15.15 )

**रत्नम्**

रत्नं तु दुर्लभादपि । ( ज्ञा॰ सि॰ 15.24 )

**रत्नसंभवम्**

रत्नानि प्रभवन्त्येव बुद्धादीनि यतो ध्रुवम् ।
ज्ञानं सत्त्वार्थसंयुक्तं रत्नसंभवमुच्यते ॥ ( ज्ञा॰ सि॰ 15.7 )
रत्नसम्भुर्भावरत्नम् ( स॰ सि॰ 2.7 )

**रागः**

रञ्जत्यशेषदुःखौघानुत्थांस्तु दुःखहेतुतः ।
सर्वसत्त्वान् यतस्तस्मात् कृपा रागः प्रगीयते ॥ ( प्र० वि० सि० 1.15 )

**लोचना**

सूक्ष्ममौदारिकं रूपं त्रैकाल्यपरिभावितम् ।
दृश्यते सर्वक्षेत्रस्थं लोचना तेन कथ्यते ॥ ( ज्ञा० सि० 15.10 )

**वज्रम्**

बोधिचित्तं भवेद् वज्रम् ( ज्ञा० सि० 15.24 )
वंकारं वज्रमित्याहुः ( अ० प्र० वि० सि०, पृ० 218 )

**वज्रधरः**

एकारं भगमित्युक्तं वंकारं कुलिशं स्मृतम् ।
मयेति चालनं प्रोक्तं वज्रधरस्य लक्षणम् ॥
शुक्राकारो भवेद् भगवान् तत्सुखं कामिनी स्मृतम् ।
धर्मसंभोगरूपत्वं वज्रधरस्य लक्षणम् ॥ ( हे० त० टी०, प० 2a )

**वज्रयोषित्**

हृदयं ज्ञानं तदेव वज्रयोषित्, अभेद्यप्रज्ञास्वभावत्वात् । ( ज्ञा० सि०, पृ० 139 )

**वज्रसत्त्वः**

अभेद्यं वज्रमित्युक्तं सत्त्वं त्रिभवस्यैकता ।
अनया प्रज्ञया युक्त्या वज्रसत्त्व इति स्मृतः ॥ ( हे० त० 1.1.4 )

**विघ्नान्तकः**

विघ्नादिभिर्विमुक्तात्मा ज्ञानं सर्वार्थसाधकम् ।
सर्वबुद्धमयं सिद्धं तेन विघ्नान्तकः स्मृतः ॥ ( ज्ञा० सि० 15.18 )

**विश्ववज्रम्**

अन्योन्यव्यापकाभेदाद् विश्ववज्रमिति स्मृतम् । ( ज्ञा० सि० 15.27 )

**वैरोचनम्**

लोचना वज्रसत्त्वानां दीप्यमाना स्वभावतः ।
ज्ञानं ताथागतं शुद्धं तद् वैरोचनमुच्यते ॥ ( ज्ञा० सि० 15.5 )
वैरोचनस्तथागतः ( स० सि० 2.7 )

**शून्यता**

सर्वधर्मनिःस्वभावतया सर्वतथागतज्ञानपरिज्ञानं शून्यता। ( ज्ञा० सि०, पृ० 135 )
सम्भोगकायश्चापि शून्यतालक्षणः। शून्यता च सर्वाकारवरोपेतत्वेन व्यवस्थिता मायामरीचि-स्वप्नप्रतिबिम्बप्रतिश्रुत्कोदकचन्द्रनिर्मितोपमस्वभावतया प्रतिपद्यते।

( अ० प्र० वि० सि०, पृ० 216 )

**समयः**

स्फुरणयोगेन समन्तात् क्रमणं समयः। यथार्थविनेयोपायैर्नानाकारैस्त्रिधातुगमनं समयः।

( हे० त० टी०, प० 3b )

**समयसत्त्वः**

नित्यसमयप्रवृत्तत्वात् समयसत्त्वोऽभिधीयते। ( हे० त० 1.1.5 )

**संवरः**

बाह्यानामौदारिकाणामध्यात्मगतं यो योगी निश्चिनुयात् तत् तेषां संवरम्, संवृतत्वात् संक्षेपवरत्वात्। ( हे० त० टी०, प० 6a )

संवरः सेकः ( हे० त० टी०, प० 7a )

**संवृतिः**

अनुयोगस्तु संवृतिः। ( अ० क्र० 64 )।
वाक्प्रपञ्चस्तु संवृतिः। ( अ० क्र० 78 )।

**सौख्यम्**

बोधिचित्तादृते नान्यत् सौख्यमस्ति त्रिधातुके।
बोधिचित्तमयं सौख्यं सर्वसौख्यप्रसर्पणम्॥ ( ज्ञा० सि०, पृ० 141 )

**हेवज्रम्**

हेकारेण महाकरुणा वज्रं प्रज्ञा च भण्यते।
प्रज्ञोपायात्मकं तन्त्रम्··· ···· ···॥ ( हे० त० 1.1.7 )

# बौद्ध तन्त्रों में देवताओं के स्वरूप–1

—जनार्दन पाण्डेय—

[ दुर्लभ बौद्ध ग्रन्थ शोध योजना के प्रारूप में यह भी निश्चय किया गया था कि तन्त्र ग्रन्थों के आधार पर आराध्य देवताओं के विविध स्वरूपों, आभरणों, आयुधों, उपाङ्गदेवताओं आदि का संकलन किया जायगा, जो कि मूर्तिकला ( इकोनोग्राफी ) की दृष्टि से अत्यन्त महत्त्वपूर्ण होगा। संग्राहलयों में पाषाणमयी, धातुमयी या चित्र रूप में जो मूर्तियाँ आती हैं उनका निर्णय करने के लिये कि यह वास्तव में किस देवता की मूर्ति है, विभिन्न तन्त्र ग्रन्थों से उनके स्वरूपलक्षण का ज्ञान आवश्यक है। कभी कभी दो या अधिक देवताओं का एक सा स्वरूप ग्रन्थों में मिलता है, किन्तु उसमें भी कुछ न कुछ सूक्ष्म भेद अवश्य होता है। एक ही देवता के आराधना भेद से स्वरूप में भी भेद हो जाता है इसलिये इस सूक्ष्मता का ज्ञान आवश्यक है। इसी पूर्वोक्त उद्देश्य की पूर्ति के लिये हम 'धीः' के इस अंक से 'देवताओं के स्वरूप' नाम से यह लेखमाला प्रारम्भ कर रहे हैं।

प्रस्तुतः अंक में भगवती तारा के सोलह स्वरूपों का निदर्शन साधनमाला ( गायकवाड़ ओरियण्टल सीरीज बड़ौदा से प्रकाशित—2 भाग ) के आधार पर किया जा रहा है। ]

## 1. तारा

### 1. अष्टमहाभयहारिणी तारा

.... .... .... सर्वालङ्कारभूषिताम्।
सव्यतो वरदां देवीं वामे तूत्पलकरां तथा॥
एकवक्त्रां सुबिम्बां च नवयौवनसंस्थिताम्।
सुगन्धिपुष्पकेशां च पद्मचन्द्रोपरि स्थिताम्॥
अर्धपर्यङ्कमवष्टभ्य रक्षयेद् भुवनत्रयम्।
अष्टदेव्यन्तराले च भावयेत् ताररूपिणीम्।

( साधनमाला, पृ॰ 207 )

### 2. आर्यजाङ्गुलीतारा

शुक्लवर्णां जटामुकुटिनीं शुक्लोत्तरीयां सितरत्नालङ्कारवतीं शुक्लसर्पैर्विभूषितां सत्त्वपर्यङ्कासनासीनां मूलभुजाभ्यां वीणां वादयन्तीं द्वितीयवामदक्षिणभुजाभ्यां सितसर्पाभयमुद्राधरां चन्द्रांशुमालिनीं ध्यायात्। ( सा॰ मा॰, पृ॰ 217 )

## 3. आर्यतारा

अर्जुननीरजचन्द्रे स्थानमुपेतामनेकगुणवहलाम् ।
शरदिन्दुधामधवलां नवयौवनमण्डिताङ्गलक्ष्मीकाम् ॥
नीलोत्पलदलनयनां सीमान्ते भक्तनागसम्भूताम् ।
कुण्डलरुचकाङ्गदकै रसनामञ्जीरघुर्घुरासहितैः ॥
संशोभिगात्रयष्टिं मुक्ताफलमाल्यचारुकुचयुग्माम् ।
मण्डितदुकूलवसनां कर्णोत्पलहारि चापवद्भ्रूकाम् ॥
चिन्तावचनविलोकनहृत्पापां सर्वसत्त्वानाम् ।
रत्नांशुजालवहलितजम्बूनदपट्टशोभिमूर्द्धानम् ॥
अमिताभबुद्धमध्यां जटिकां दधतीं मनोहरामेवम् ।

( सा० मा० पृ० 222 )

## 4. खदिरवणी तारा

हरिताममोघसिद्धमुकुटीं वरदोत्पलधारिदक्षिणवामकरां अशोककान्तां मारीच्येकजटाव्यग्र-दक्षिणवामदिग्भागां दिव्यकुमारीमलङ्कारवतीं ध्यात्वा । ( सा० मा० पृ० 176 )

## 5. दुर्गोत्तारिणी तारा

एतां भगवतीं दुर्गोत्तारिणीं तारां मुहुःश्यामां चतुर्भुजां वामेन पाशं दक्षिणेनाङ्कुशधारिणीं भक्तमाश्वासयन्तीं दक्षिणेन वरदां दिव्यमालाम्बरधारिणीं वामेन नीलोत्पलहस्तां सितवस्त्रप्रावृतदेहां पद्मासनस्थां त्रिकालं ध्यायेत् । ( सा० मा०, पृ० 237 )

## 6. धनदतारा

चन्द्रासनप्रभां सौम्यां सत्त्वपर्यङ्कस्थां हरितश्यामामेकवदनां द्विलोचनां चतुर्भुजां अक्षसूत्रवर-दोत्पलपुस्तकधरां विचित्रवस्त्रालङ्कारवतीम् ।····

अथवा

पुटस्थचन्द्रेषु वज्रतारादिदेवीर्झटिति दृष्ट्वा पश्चाद् विभावयेत्, पूर्वे वज्रतारां कृष्णां वज्रहस्ताम्, दक्षिणे रत्नतारां पीतां रत्नहस्ताम्, पश्चिमे पद्मतारां रक्तकमलहस्ताम्, उत्तरे बुद्धतारां शुक्लां चक्रधारिणीम्, आग्नेये पुष्पतारां सितां पुष्पदामधराम्, नैर्ऋत्ये धूपतारां कृष्णां धूपकटच्छूहस्ताम्, वायव्ये दीपतारां पीतां दीपयष्टिधराम्, ऐशाने गन्धतारां रक्तां गन्धशङ्खधराम्, इमा विश्वपद्मपत्रस्थ-चन्द्रेष्वष्टौ शशिप्रभाः सत्त्वपर्यङ्कनिषण्णा वामेनोत्पलधारिकाः स्मेरवदना नानालङ्कारवस्त्रधारिण्यः,

पूर्वद्वारे वज्राङ्कुशीं कृष्णां वज्राङ्कुशधराम्, दक्षिणे वज्रपाशीं पीतां वज्रपाशहस्ताम्, पश्चिमे वज्रस्फोटां रक्तां वज्रस्फोटधारिणीम्, उत्तरे वज्रघण्टां शुक्लां वज्रघण्टाहस्ताम्, एताश्चतुर्द्वारेषु पश्येत् सूर्यप्रभाः पिङ्गलोर्ध्वज्वलत्केशा आलीढपदस्थिता भुजङ्गभूषणा विकृतवदना व्याघ्रचर्माम्बरधरा वामकरेणोत्पलधारिकाः। ( सा० मा०, पृ० 219 )

## 7. प्रसन्नतारा

हेमवर्णां महाघोरां तारादेवीं महर्धिकाम्।
त्रिनेत्रामष्टवदनां भुजषोडशभूषिताम्॥
ऊर्ध्वपिङ्गलकेशां सार्द्रशतार्धमुण्डमालाकृतहाराम्।
प्रत्यालीढपदोपेतां जगत्त्राणां महाबलाम्॥
विचित्रवस्त्रनेपथ्यां हसन्तीं नवयौवनाम्।

प्रधानमुखं पीतं दक्षिणे द्वितीयं नीलं तृतीयं श्यामं चतुर्थं गगनश्यामम्, वामे कुन्दसन्निभं द्वितीयं रक्तं तृतीयं गगनश्यामम्, ऊर्ध्वास्यं धूम्रवर्णाभं महाघोरम्, मध्यास्यं विकटोत्कटम्, दक्षिणकरेषु खड्गोत्पलशरवज्राङ्कुशदण्डकर्त्रि-अभयधराम्, वामभुजेषु सपाशतर्जनिकपालधनुःखट्वाङ्गसवज्रपाश-ब्रह्मशिरोरत्नकलशधरां विश्वपद्मचन्द्रस्थां सूर्यप्रभाविभूषितां वामपादेनेन्द्रं दक्षिणपादेनोपेन्द्रं पादद्वयमध्ये रुद्रं ब्रह्माणं चाक्रम्य स्थितां सर्वावरणविनाशिनीं भावयेत्। ( सा० मा०, पृ० 241 )

## 8. महत्तरी तारा

ततश्चन्द्रे ताँसम्भूतां सितोत्पलस्थताँकारोद्भूतां तारां श्यामां द्विभुजां दक्षिणे वरदां वामे सनालेन्दीवरधरां सर्वाभरणभूषितां पद्मचन्द्रासने पर्यङ्कनिषण्णां चिन्तयेत्। ( सा० मा०, पृ० 176 )

## 9. महाचीनक्रमार्यतारा

कृष्णामार्यताराभट्टारिकां चतुर्भुजैकमुखीं त्रिनेत्रां खर्वलम्बोदरां दंष्ट्राकरालवदनां प्रत्यालीढपदेन शवारूढां नागाष्टकभूषणां व्याघ्रचर्मवसनाम् अवलम्बमानमुण्डमालां पञ्चमुद्राविभूषितां खड्ग-कर्त्रिधारिदक्षिणकरामुत्पलकपालधारिवामकरां साक्षोभ्यनाथपिङ्गलजटाजूटाम् अति घोराट्टहासभीम-रूपां निष्पाद्य·····। ( सा० मा०, पृ० 208 )

## 10. महाश्रीतारा

महाश्रीतारां चन्द्रासनस्थां श्यामवर्णां द्विभुजां हस्तद्वयेन व्याख्यानमुद्राधराम् एकवक्त्रां सर्वालङ्कारभूषितां पार्श्वद्वयेनोत्पलशोभां सुवर्णसिंहासनोपरि अपाश्रयादिशोभां नानापुष्पाशोकचम्पक-नागेश्वरपारिजातकादिभी राजिताममोघसिद्धिमुकुटिनीम्।

महाश्रीताराया: पार्श्वे एकजटामर्धपर्यङ्कोपविष्टां नीलवर्णां कर्त्रिकपालधरां सक्रोधां लम्बोदरां पिङ्गलजटाविभूषितां व्याघ्रचर्माम्बरधराम्, दक्षिणे पार्श्वे अशोककान्तां पीतवर्णां रत्नमुकुटिनीं वज्रा-

शोकधराम्, पुनर्वामे आर्यजाङ्गुलीं श्यामवर्णां सर्पवरदहस्ताम्, दक्षिणे महामायूरीं मयूरपिच्छवरदहस्ताम् । ( सा० मा०, पृ० 244 )

## 11. मृत्युवञ्चनतारा

सितारविन्दमध्यस्थां तां भूतां चन्द्रविष्टराम् ।
आबद्धवज्रपर्यङ्कां वरदोत्पलधारिणीम् ॥
शरच्चन्द्रकराकारां पृष्ठचन्द्रसमाश्रिताम् ।
सर्वालङ्कारसंपूर्णां षोडशाब्दवपुः क्रमात् ॥

( सा० मा०, पृ० 212 )

## 12. वज्रतारा

मातृमण्डलमध्यस्थां तारादेवीं विभावयेत् ।
अष्टबाहुं चतुर्वक्त्रां सर्वालङ्कारभूषिताम् ॥
कनकवर्णनिभां भव्यां कुमारीलक्षणोज्ज्वलाम् ।
[1]पञ्चबुद्धमहामुकुटीं वज्रसूर्याभिषेकजाम् ॥
नवयौवनलावण्यां चलत्कनककुण्डलाम् ।
विश्वपद्मसमासीनां रक्तप्रभाविभूषिताम् ॥
वज्र पाश तथा शंख सच्छरोद्यतदक्षिणाम् ।
वज्राङ्कुशोत्पलधनुस्तर्जनीवामधारिणीम् ॥
वज्रपर्यङ्कयोगेन साधयेद् भुवनत्रयम् ॥
पूर्वेण पुष्पतारां तु सितवर्णां मनोरमाम् ।
ॐकाराक्षरनिष्पन्नां पुष्पदामकराकुलाम् ॥
द्विभुजामेकवक्त्रां च सर्वालङ्कारभूषिताम् ।
दक्षिणे धूपतारां तु कृष्णवर्णां सुरूपिणीम् ॥
धूपशाखाकरव्यग्रां सर्वालङ्कारभूषिताम् ।
पश्चिमे दीपतारां च दीपयष्टिकराकुलाम् ॥
पीतवर्णां महाभूषां चलत्कनककुण्डलाम् ।
उत्तरे गन्धतारां च गन्धशङ्खकराकुलाम् ॥
रक्तवर्णनिभां देवीं भवयेद् गर्भमण्डले ।
द्वारपालीस्ततो ध्यायादङ्कुश्यादिप्रभेदतः ॥

1. पृष्ठ 196,204 में 'चतुर्बुद्धमहामुकुटीम्' पाठ दिया है । शेष स्वरूप वही है ।

पूर्वद्वारे वज्राङ्कुशीमेकवक्त्रां द्विभुजां वज्राङ्कुशोत्पलहस्तां विकृतवदनां कृष्णवर्णाम्, दक्षिणद्वारे वज्रपाशीं पीतवर्णां विकृताननाम् एकवक्त्रां द्विभुजां वज्रपाशहस्ताम्, पश्चिमद्वारे वज्रस्फोटीं रक्तवर्णाम् एकवक्त्रां द्विभुजां विकृतवदनां वज्रस्फोटहस्ताम्, उत्तरद्वारे वज्रघण्टां श्वेतवर्णाम् एकवक्त्रां द्विभुजां विकृतवदनां वज्रघण्टाहस्ताम्, एता आलीढपदस्थाः सूर्यासनाः सूर्यप्रभाज्वालामालाकुलाः सर्पाभरणा द्रष्टव्याः। ( सा० मा०, पृ० 179-180 )

## 13. वरदतारा

श्यामतांकारजां तारां श्यामवर्णां सर्वालङ्कारधरां वामे नीलोत्पलवतीं दक्षिणे वरदाम् अर्धपर्यङ्क-निषण्णाम्, दक्षिणपार्श्वेनाऽशोककान्तां पीतां नानारत्नमुकुटाम्, वामदक्षिणहस्तयोरशोकपल्लवकुलिश-धरां तथा महामायूरीं पीतां वामेतरकरयोर्मयूरपिच्छिकाचामरधारिणीम्, वामपार्श्वे एकजटां खर्वां कृष्णां व्याघ्राजिनधरां त्रिनेत्रां दंष्ट्राकरालवदनां ज्वलत्पिङ्गलोर्ध्वकेशां कर्त्रिकपालधारिणीं तथा आर्यजाङ्गुलीं श्यामां वामदक्षिणहस्तयोः कृष्णोरगचामरधारिणीं विभावयेत्। (सा० मा०, पृ० 177)

## 14. वश्याधिकारतारा

आर्यतारां श्यामवर्णां वामेनोत्पलधरां दक्षिणे वरदां भद्रासनस्थिताममोघसिद्धिमुकुटीं ध्यात्वा।
( सा० मा०, पृ० 178 )

## 15. षड्भुजशुक्लतारा

त्रिमुखां षड्भुजां पीतनीलदक्षिणेतरमुखीं प्रतिमुखं त्रिनेत्रां वरदाक्षसूत्रशरधरदक्षिणत्रिकराम्, उत्पलपद्मचापधरवामपाणित्रयाम्, अर्धपर्यङ्कनिषण्णां चन्द्रासनचन्द्रप्रभां जटामुकुटस्थितामोघसिद्धिं पञ्चमुण्डविभूषितमस्तकाम् अर्धचन्द्रकृतशेखरां नानालङ्कारधरां द्विरष्टवर्षाकृतिमष्टश्मशानमध्यस्थितां विचिन्त्य। ( सा० मा० पृ० 216 )

## 16. सिततारा

तारां भगवतीं शुक्लां त्रिनेत्रां चतुर्भुजां पञ्चतथागतमुकुटीं नानालङ्कारां भुजद्वयेनोत्पलमुद्रां दधानां दक्षिणभुजेन चिन्तामणिरत्नसंयुक्तवरदां सर्वसत्त्वानामाशां परिपूरयन्तीं वामेनोत्पलमञ्जरीं बिभ्राणां ध्यायात्। तस्या दक्षिणपार्श्वे मारीचीं पीतां चन्द्रासनां नीलाम्बरां द्विभुजां वामेन रक्ताशोक-पल्लवधरां दक्षिणेन सितचामरधरां रक्तकञ्चुकाभरणाम्, वामपार्श्वे महामायूरीं प्रियङ्गुश्यामां द्विभुजां वामेन मयूरपिच्छधरां दक्षिणेन चामरधरां विचिन्त्य। ( सा० मा०, पृ० 215 )

•

# दुर्लभ ग्रन्थों की

डॉ० ठाकुरसेन

[इस शीर्षक से 'धीः' के प्रथम अंक में २८ ग्रन्थों की आधार सामग्री की सूचना दी गई थी। वहीं इस शीर्षक का संक्षिप्त परिचय भी दिया गया था। द्वितीय अंक में १४ ग्रन्थों एवं २ टीकाओं की तथा तृतीय अंक में २८ ग्रन्थों एवं ४ टीकाओं की आधार सामग्री की सूचना दी गई थी।

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| अभिषेकविधि<br>Abhiṣeka Vidhi<br>No. 1535 (Za. 102a²-108b³)<br>Dbaṅ-gi cho-gaḥi rim-pa shes-bya ba<br>A. Bde-bahi rgyal-po. (K)<br>T. Śrī parahita.<br>[The text of Vajrācarya initiation.] | | RAK<br>"<br>IASWR<br>" | Reel No. H. 148/3<br>5/7297<br>MBB-II-250<br>MBB-II-16 |
| अष्टपीठ पूजाविधि<br>Aṣṭapīṭha Pūjā Vidhi | | RAK<br>IASWR | 4/1154<br>MBB-II-83 |
| अष्टमातृकापूजा<br>Aṣṭamātṛkā Pūjā<br>[Aṣṭamātṛkā Pūjā are known as dansing goddesses in the maṇḍala of Heruka and Vajravārāhī, To know these dieties this text is very useful.] | | RAK<br>"<br>IASWR | 4/1035<br>4/346<br>MBB-I-136 |
| उष्णीषमुद्राचक्रतन्त्रराजतन्त्र<br>Uṣṇīṣamudrācakratantrarājatantram<br>Nj No. 1023. K'-yuen-lu, Fasc. 5, Fol. 13b; Conc. 222, 3 Fasciculis; 9 chapter. It agrees with Tibetan. | | RAK | 3/715 |

# आधार सामग्री

## नेगी

प्रस्तुत अंक में २३ ग्रन्थों एवं ३ टीकाओं की आधार सामग्री का परिचय दिया जा रहा है, जिनमें से उपलब्ध कुछ ग्रन्थों के तिब्बती, चीनी एवं जापानी अनुवादों की भी सूचना रोमन अक्षरों में दी जा रही है। किन्तु जिन ग्रन्थों के तिब्बती, चीनी एवं जापानी अनुवाद हमें उपलब्ध न हो सके, उनकी सूचना मिलने पर आगे के अंकों में प्रकाशित किया जायेगा।]

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | 51 | Incomp. | |
| ,, | ,, | ब्यास्फु | Demage. | |
| ,, | ,, | 12 | Comp. | |
| ,, | ,, | 31 | Comp. | |
| NP | N | 20 | | |
| ,, | ,, | 14 | Comp. | |
| NP | Dev. | ठ्यास्फु | | |
| ,, | N | 66 | Comp. | |
| ,, | Dev. | 23 | ,, | 1949 A. D. |
| PL | N | 7 | | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| कालचक्रतन्त्र | | SMTUL | 99 |
| Kālacakra Tantra | | | |
| No. 362 (Ka. 22b$^{1}$-128b$^{7}$) | | RAK | 4/19 |
| Mchog-gi daṅ-Poḥi Saṅs-rgyas-las | | ,, | 5/1285 |
| Phyuṅ-ba rgyud. Kyi rgyal-Po dpal | | ,, | 3/293 |
| dus-kyi ḥkhor-lo Shes-bya-ba. | | ,, | Reel. No. E. 588/19 |
| [Paramādibuddhoddhṛtśrī Kāla | | ,, | 3/602 |
| Cakra-nāma-tantra rāja.] | | ,, | 3/292 |
| T. Somanāth (K) Ḥbro Śes-rab grags. | | ,, | 5/293 |
| R. Śoṅ-ston Rdo-rje rgyal-mtshan. | | JBORS | XIV. 85 |
| | | GOS | 13268 |
| | | ,, | 13392 |
| | | ,, | 13795 |
| | | IASWR | MBB-II-100 |
| | | ,, | WGS-22 |
| | | ,, | MBB-II-71 |
| | | RAS G.B. | |
| | | KPJRI | |
| | | ,, | |
| | | CULM | |
| | | VBM | |
| | | SPS | Vol. 69,7 |
| | | ,, | Vol. 81 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| Paper | Dev. | 132 | | |
| PL | N | | | |
| ,, | ,, | 22 | Demage. | |
| NP | ,, | 91 | Comp. | |
| ,, | ,, | 138 | ,, | |
| ,, | Dev. | 96 | ,, | |
| ,, | ,, | 91 | ,, | |
| ,, | N. | 113 | ,, | |
| ,, | ,, | 120 | ,, | |
| | | 109 | | |
| | | 303 | | |
| | | 130 | | A.D. 1936 Photocopy |
| NP | | 110 | | A. D. 1688 |
| ,, | | 22 | | A. D. 1642 |
| ,, | | 20 | | A. D. 1743 |
| | Beng. | 180 | | |
| | ,, | 50 | | |
| | ,, | 72 | | |
| | ,, | 128 | | 1446 A. D. |
| | Dev. | 120 | | |
| | | | | Ed. L. C. |
| | | | | ,, ,, |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| कालचक्रतन्त्रटीका विमलप्रभा | | JBORS | XXXVIII 236 |
| Kāla Cakratantra Tīkā Vimala Prabhā | | ,, | XXIV. 1-274 |
| No. 1347 (Tha 107b[1]-277a[1]) | | ,, | XXXV. 1-306 |
| No. 845 (Śrī. 1b[1]-469a[7]) | | ,, | XXIII.,113 |
| Bsdus-Paḥi rgyud-Kyi rgyal-po dus-kyi-ḥkhor-loḥi ḥgrel-bśad, rtsa-baḥi rgyud-kyi rjes-Su-hjug-pa stoṅ-Phrag-bcu-gñis-pa dri-ma med-paḥi ḥod ces-bya-ba. | | RAK | 5/240 |
| | | ,, | 5/238 |
| | | ,, | 5/230 |
| | | ,, | 5/241 |
| A. Spyan-ras-gzigs dbaṅ-phyug. | | IASWR | MBB-I-24 |
| T. Tshul-Khrims dar, Shaṅ-Ston mdo-sde-dpal, śoṅ-ston rdo-rje rgyal-mtshan, Blo-gros rgyal-mtshan. | | GOS | 13218 |
| | | RASB | 66/4727 |
| | | | 67/10766 |
| R. Blo-gros dpal-bzaṅ-po. | | PCHVV | 1 |
| | | PCDVV | 1 |
| | | PCAKV | 1 |
| गुरुमण्डल | | RAK | Reel. No. E. 280/24 |
| Gurumaṅdala | | ,, | H. 102/2 |
| | | ,, | H. 65 |
| | | ,, | 4/1034 |
| | | ,, | 4/1041 |
| | | ,, | Reel No. E. 365/6 |
| | | ,, | H. 123/21 |
| गुरुमण्डलविधि Gurumaṇḍala Vidhiḥ | | IASWR | MBB-I-143 |
| [Gurumaṇḍala Vidhiḥ is the idea of combination of humantary and universe to understand this text is very interesting.] | | RAK | 1/1696 |
| | | ,, | 4/2262 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| Paper | Sinhalese | 47 | Incomp. | |
| | Māgadhī | 20 | ,, | First two Paṭalas only. |
| | Kuṭilā | 45 | ,, | One Chapter only. |
| | Māgadhī | | Comp. | |
| PL | N | 258 | Demage. | |
| | ,, | 138 | ,, | |
| PL | ,, | 151 | | |
| NP | Dev. | 153 | Comp. | |
| ,, | ,, | 332 | ,, | |
| | | 346 | | 1-4 Paṭalas |
| PL | N | 55 | Incomp. | 15th Century |
| ,, | Beng. | 222 | Comp. | 10th Century |
| | | | ,, | 1-4 Paṭalas |
| NP | Dev. | 332 | ,, | 1-4 ,, |
| ,, | ,, | 325 | | |
| NP | Dev. | 10 | Comp. | |
| ,, | N | 12 | Incomp. | |
| ,, | Dev. | 67 | Comp. | |
| ,, | N | क्यास्फु | ,, | |
| ,, | Dev. | ,, | ,, | |
| ,, | ,, | 9 | ,, | |
| ,, | N | 13 | ,, | |
| NP | Dev. | 12 | Comp. | |
| ,, | N | क्यास्फु | | |
| ,, | ,, | ,, | | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| श्रीचतुष्पीठमहातन्त्रराज | | BAK | 5/37 |
| Śri Catuḥ Pīṭha Mahā Tantrarāja | | ,, | 4/20 |
| No. 430 (Ṅa. 260a$^{3}$-304a$^{7}$) | | ,, | Reel No. E. 629/2 |
| Dpal gdan-Bshi-paḥi rnam-par- | | ,, | 37/1200 |
| Bśad-paḥi rgyud-Kyi rgyal-po | | IASWR | MBB-I-41 |
| Shes-Bya-Ba. | | ,, | MBB-III-5 |
| T. Smṛti jñāna Kirti. | | GOS | 13243/26 |
| R. Bu-Ston. | | BLJ | K A 51-3 |
| [This text is very important to understand the yoga (Joining stage of Prajñā and upāya) which is divided into four Stages as Ātma Pīṭh, Para Pīṭh, yoga Pīṭh and Guhya Pīṭh]. | | | |
| चतुष्पीठमहातन्त्रटीका | | BAK | 5/38 |
| Catuṣ Pīṭh mahā tantra Tīkā. | | ,, | 3/366 |
| [This Ms is the best Commentary on Catuṣ pīṭh Mahā Tantra which is very useful to understand the secret meaning of Tantra.] | | IASWR | MBB-I-49 |
| | | ,, | MBB-I-43 |
| चतुष्पीठमण्डलोपायिका | | BAK | 5/891 |
| Catuṣ Pīṭh maṇḍalopāyikā | | ,, | 1/1697 1/24 |
| | | ,, | 5/80 |
| | | ,, | 1697 Ka$^{2}$ |
| | | ,, | 10/200 |
| | | ,, | 3/602 |
| | | SMTUL | 280 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | 118 | Comp. | |
| ,, | Bhujimol | 59 | Incomp. | |
| ,, | N | 305 | Comp. | |
| ,, | ,, | 71 | Demage | |
| ,, | ,, | 62 | Comp. | |
| | | 54 | | |
| | | 30 | | |
| ,, | ,, | 77 | | 1028 N. S. |
| NP | N | 74 | Incomp. | |
| ,, | ,, | 60 | Comp. | |
| | ,, | | | |
| PL | Bhuji Mola | 121 | Demage | |
| NP | ,, | 138 | Comp. | |
| | N | 30 | Comp. | |
| | ,, | 12 | | |
| | Rañjana | 30 | | |
| | N | 12 | | |
| | Dev. | 6 | Demage | |
| | ,, | 14 | Comp. | |
| | N | 14 | Incomp. | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| चिन्तामणिस्तोत्रटीका<br>Cintāmaṇistotra Tīkā | Śākyabuddhi | RAK | 4/122 |
| | | ,, | 5/133 |
| | | GOS | 13277/28 |
| तृतीय पीठ तन्त्र<br>Tṛtīya Pīṭha T ntra<br>[It is compared in the style of Pañca rakṣa subject is protection from diseases and Calamities.] | | IASWR | MBB-I-133 |
| दशक्रिया<br>Daśakriyā | | RAK | 4/2461 |
| | | ,, | 5/150 |
| | | ,, | 5/219 |
| | | ,, | 5/1696 |
| | | ,, | 1/1696 |
| दशक्रियासंग्रह<br>Daśakriyā Saṁgraha<br>[The collection of complete ritual works from birth to death.] | | IASWR | MBB-II-10 |
| दीक्षाविधान<br>Dīkṣāvidhāna<br>[The practical text on Tantra and Ritual convocation after study with Dharma way.] | | IASWR | MBB-II-1 |
| | | ,, | MBB-II-275 |
| | | PCHVV | 1 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| PL | Maithilī | 39 | | |
| NP | Dev. | 15 | Comp. | |
| | | 28 | | |
| NP | N | 107 | Comp. | |
| NP | N | 18 | | |
| ,, | ,, | 149 | | |
| ,, | ,, | 32 | | |
| ,, | ,, | 25 | | |
| ,, | ,, | ठ्यास्फु | | |
| ,, | ,, | 99 | Comp. | |
| NP | N | 61 | Comp. | |
| ,, | ,, | 61 | ,, | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| प्रायश्चित्तविधि<br>Prāyaścitta Vidhih<br><br>[In this text, the Nepalese Buddhist ways to be free from moral Violences is written in domestic ritual way which is very interesting.] | | IASWR<br>,, | MBB-I-144<br>MBB-III-20 |
| मण्डलगाथा टिप्पणी<br>Maṇḍala Gāthā Tippaṇi<br>[This collection of five very important texts which are rare to find.] | Nāgārjuna etc. | IASWR<br>,, | MBB-II-114<br>MBB-I-90 |
| मण्डलप्रक्रिया<br>Maṇḍala Prakriyā<br>[It contents maṇḍalas of many dieties with instructions how to make maṇḍala] | | IASWR | MBB-II-118 |
| मण्डलसाधनाविधि<br>Maṇḍala Sādhanāvidhi<br>[Idea of Maṇḍala and meditation on it.] | | IASWR | MBB-II-272 |
| मण्डलावली<br>Maṇḍalāvali<br>[It is a collection of many maṇḍalās of different dieties with discription.] | | IASWR | MBB-II-244 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | Dev. | 72 | Comp. | 1919 A. D. |
| ,, | N | 29 | ,, | |
| NP | Dev. | 12 | | It is a commentary of Gurumaṇḍala |
| ,, | N | 30 | Comp. | |
| ,, | N | 116 | Comp. | |
| ,, | N | 28 | ,, | |
| ,, | ,, | 110 | Comp. | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| मारणोच्चाटनविधि<br>Māraṇoccāṭana Vidhi<br>[It is very rare book concerning black art in Buddhist texts, it is mentioned within the subjuct of Māraṇa uccāṭana etc. This Ms is well illustrated.] | | IASWR | MBB-I-154 |
| मारणोच्चाटनादियोग<br>Māraṇoccāṭanādiyoga<br>[In the subject of black art, the combined work of Hinduism and Buddhism.] | | IASWR | MBB-II-99 |
| योगसिद्धान्त बौद्धसिद्धितन्त्र<br>Yogasiddhānta Bauddhasiddhitantra | | IASWR | MBB-I-158 |
| लोकेश्वरशतक<br>Lokeśvara Śataka<br>No. 2728. (Nu. 96b$^{4}$-107a$^{2}$)<br>Ḥjig-sten dbaṅ-Phyug-gi bstod-Pa brgya-pa.<br>A. Śrī Vajra Deva.<br>T. Lakṣmikara Śoṅ ston | Vajra Datta. | RAK<br>,,<br>,,<br>,,<br>,,<br>,,<br>,,<br>,,<br>,, | 5/122<br>4/1041<br>4/140<br>4/140<br>5/121<br>3/652<br>3/287<br>5/119<br>5/123 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| NP | N | 40 | Comp. | |
| ,, | ,, | 23 | Comp. | |
| ,, | N | 26 | Incomp. | |
| PL | Dev. | 39 | | |
| ,, | N | 14 | | |
| ,, | ,, | 26 | | |
| ,, | ,, | 33 | | |
| ,, | ,, | 17 | | |
| ,, | Dev. | 11 | Comp. | |
| ,, | ,, | 26 | ,, | |
| ,, | ,, | 19 | | |
| ,, | ,, | 18 | | |

| Title | Author | Institution | Ms. No. |
|---|---|---|---|
| [The one hundred stanzas on Lokeśvara with standard Sanskrit.] | | SMTUL | 20/-1 |
| | | ,, | 342 |
| | | ,, | 344-3 |
| | | ,, | 318-36B |
| | | ,, | 420-IV |
| | | IASWR | MBB-II-44 |
| लोकेश्वरशतकटीका Lokeśvara-Śataka-ṭīkā [This ms Contains a commentary on the first 31 Verses of Lokeśvara Śataka.] | Dharma Rāja | RASB | 55/10732 |
| | | RAK | 4/89 |

| Material | Script | Folio | Comp./Incomp. | Other Information |
|---|---|---|---|---|
| | | ($281a^{1}$-$295b^{2}$)<br>($175a^{2}$-$198b^{3}$)<br>($87a^{4}$-$102a^{1}$) | | |
| NP | N | 15 | Comp. | 1799AD |
| NP | N | 61 | | |
| | | 25 | Incomp. | |

# नामसंगीति की अध्ययन सामग्रियाँ–3

## ( नामसंगीति एवं विष्णुसहस्रनाम )

—बनारसी लाल—

[ नामसंगीति एवं विष्णुसहस्रनाम दोनों ही स्तुति-ग्रन्थ हैं। विष्णुसहस्रनाम स्तोत्र में विष्णु के सहस्र नामों को बताया गया है और नामसंगीति में मञ्जुश्री के आठ सौ से अधिक विशेषणों को गिनाया गया है। नामसंगीति के संभावित काल पर पूर्व के अंकों में प्रकाश डाला जा चुका है। विष्णुसहस्रनाम भी महाभारत के अनुशासन पर्व का माना जाता है। यद्यपि दोनों के ऐतिहासिक समय का निर्णय करना दुरूह कार्य है, तथापि यह कहा जा सकता है कि इस प्रकार के स्तुति-ग्रन्थों का प्रारम्भ तन्त्र के प्रादुर्भाव के प्रारम्भिक काल का माना जा सकता है। भारतवर्ष में तन्त्रों का प्रादुर्भाव छठीं शताब्दी के आस-पास हो चुका था।

मञ्जुश्रीनामसंगीति और विष्णुसहस्रनाम में कई ऐसे विशेषण शब्द हैं, जो दोनों ग्रन्थों में समान रूप से प्रयुक्त हुए हैं। इस प्रकार इनके एक दूसरे के अभिप्राय एवं परस्पर प्रभाव इत्यादि का अध्ययन किया जा सकता है। एतद्दृष्ट्या दोनों ग्रन्थों में आये समान विशेषण वाले 47 शब्दों को यहाँ प्रस्तुत किया जा रहा है। एवं इनके अर्थों के स्पष्टीकरण हेतु दोनों ग्रन्थों की दो दो टीकाओं में व्याख्यात उक्त पदों के अर्थों को भी दिया गया है। यहाँ विष्णुसहस्रनाम पर श्रीरामशर्मा द्वारा विरचित शाङ्करभाष्यार्थसंग्रहः (शा० भा०) और श्रीगम्भीरभारतीसूरि कृत पद्मप्रसूनाञ्जलि[1] (प०) तथा मञ्जुश्रीनामसंगीतिपर रविश्री की अमृतकणिका नामसंगीति टिप्पणी (अ० क०) और आचार्य विलासवज्र प्रणीत नाममन्त्रार्थावलोकिनी[2] (ना० अ०) से उक्त पदों के अर्थों को उद्धृत किया गया है। ]

**1. अग्रणीः** (वि० स० 37, ना० सं० 8।18)

सहजानन्दत्वादग्रणीः। ( अ० क० 8।18 )
अग्रणीरिति स्वगात्रेषु ज्येष्ठत्वं सर्वज्ञज्ञानलाभात्। ( ना० अ० 8।18 )
प्रकृष्टपदनेतृत्वान्मुमुक्षूणामिहाग्रणीः। ( शा० भा० 119 )
अग्रं पदं प्रकृष्टं यन्मुमुक्षुं नयतीत्यसौ।
विष्णुरेवाग्रणीः प्रोक्तः स नः पायादपायतः॥ (प० स० म०18 )

---

1. श्रीविष्णुसहस्रनामस्तोत्रम्—( शाङ्करभाष्यार्थसंग्रह—पद्मप्रसूनाञ्जलिभिः सहितम् )—सम्पा० विद्वान् आर० रामशास्त्री प्राच्यविद्यासंशोधनालयः मैसूरविश्वविद्यालय, मैसूर 1960।
2. नामसंगीति के उक्त दोनों टीकाग्रन्थ अप्रकाशित हैं।

2. **अनादिः** ( वि० स० 114, ना० सं० 6।5 )

अनादिराद्यनुत्पन्नो निष्प्रपञ्चः सर्वासत्संकल्पवर्जितः । (अ० क० 6।5)

अनादिरिति न विद्यते आदिरुत्पत्तिर्यस्यासावनादिः । (ना० अ० 6।5)

अनादिः कारणाभावात् सर्वकारणकारणम् । (शा० भा० 512)

यस्यादिः कारणं नैव विद्यतेऽनादिरच्युतः ।
अनादित्वान्निर्गुणत्वात् परमात्मेति च श्रुतेः ॥ (प० स्व० म० 41)

3. **अनादिनिधनः** (वि० स० 18, ना० सं० 8।24)

धर्मधातुज्ञानरूपत्वेन न विद्यते आदिनिधने उत्पादनिरोधौ त्रिरमच्युतिक्षणौ यस्य स तथा । (अ० क० 8।24)

तत्र अनादिनिधन इति, आदिश्च निधनं च आदिनिधने, न विद्येते आदिनिधने यस्यासावनादिनिधनः । उत्पादनिरोधाभावात् तस्य भगवतः । (ना० अ० 8।24)

जन्मनाशविहीनत्वादनादिनिधनो हरिः । (शा० भा० 24)

आदिरुत्पत्तिरित्युक्ता निधनं तु विनाशनम् ।
न विद्यते स्वयं यस्य सोऽनादिनिधनो हरिः ॥ (प० वि० म० 42)

4. **अपराजितः** (वि० स० 89, ना० सं० 8।25)

सर्वकायवाक्चित्तैक्येनाच्युतबोधिचित्तत्वेन विकल्पोर्मिभिर्न जीयत इत्यपराजितः । (अ० क० 8।25)

अपराजित इति परैर्न जीयत इति अपराजितः । स च एवं गुणविशिष्टो भगवानेव मञ्जुश्रीः । (ना० अ० 8।25)

अजितः शत्रुभिर्बाह्याभ्यन्तरैरपराजितः । (शा० भा० 385)

न सुरैरसुरैर्वापि न यक्षैर्न च राक्षसैः ।
पराजितः कैश्चिदपि हरिरित्यपराजितः ॥ ( प० अ० म० 62)

5. **अमोघः** (वि० स० २५, ३०, ना० सं० 6।25, 9।19)

अमोघम् अबन्ध्यमव्याहतसुखं जगदर्थम् । ( अ० क० 9।19)

अमोघोऽबन्ध्यः । (अ० क० 6।25)

अमोघगतिरिति । अमोघाऽबन्ध्या गतिर्गमनं यस्यासावमोघगतिः । (ना० अ० 6।7)

अमोघोऽबन्ध्यः । (ना० अ० 6।25)

अमोघोऽबन्ध्यः । (ना० अ० 9।19)

व्यर्थसङ्कल्पशून्यो वा यः स्यात्सोऽमोघ ईरितः । ( शा० भा० 61)
चेष्टितं यस्य मोघं नेत्यमोघः स हरिर्मतः । (शा० भा० 84)
श्रुतः स्मृतः पूजितो वा फलमद्धा प्रयच्छति ।
मोघं व्यर्थं न कुरुते यतोऽमोघाभिधो हरिः ॥ ( प० बृ० म० 10 )
मोघं व्यर्थं न भवति हरेर्यद्यच्च चेष्टितम् ।
तस्मादमोघः श्रीविष्णुरुच्यते ब्रह्मविज्जनैः ॥ (प० बृ० म० 54)

6. **कान्तः** (वि० स० 45, ना० सं० 8।5, 28)

सर्वधर्मैकरसत्वेन सर्वजनाभिलषणीयत्वात् कान्तः । ( अ० क० 8।5)
स्वाधिष्ठानरूपत्वात् सुन्दरः कान्तः । ( अ० क० 8।28)
कान्त इति । काम्यत इति कान्तः कमनीयः सर्वसत्त्वैरभिलषणीयत्वात् । (ना० अ० 8।5)
अभिरूपतमः कान्तो भगवान् सुन्दराकृतिः । (शा० भा० 160)
अभिरूपतमः कान्तः स्यादासेचनकं हरिः ।
तन्नमामि रमाकान्तमैकान्तिकसुखप्रदम् ॥ (प० स० म० 96)

7. **गुरुः** ( वि० स० 36, ना० सं० 1।9, 10।7 )

सर्वप्रपञ्चोपशमेनाविचलितसुखज्ञानविहारित्वाज्जगद्गुरुः । ( अ० क० 10।7 )
जगद्गुरुरिति । अत एव जगतां गुरुर्जगद्गुरुः । ( ना० अ० 10।7 )
गुरुर्विद्योपदेष्टा वा सर्वेषां जनकोऽथवा । ( शा० भा० 114 )
विद्यानामुपदेष्टृत्वात् सर्वेषां जनकत्वतः ।
गुरुरेव परं ब्रह्म स्मृत्या विष्णुर्गुरुः स्मृतः ॥ ( प० स० म० 9 )

8. **निर्वाणम्** ( वि० स० 75, ना० सं० 8।20 )

भावाभावपरामर्शशून्यत्वान्निर्वाणम् । ( अ० क० 8।20 )
तत्र निर्वाणमित्युद्देशः । ( ना० अ० 8।20 )
निर्वाणं सर्वदुःखोपशमाख्यानन्दरूपतः । ( शा० भा० 313 )
मोक्षरूपतया सर्वदुःखोपशमलक्षणम् ।
परमानन्दरूपं यद्ब्रह्म निर्वाणमुच्यते ॥ ( प० क० म० 77 )

9. **प्रजापतिः** ( वि० स० 36, ना० सं० 8।5 )

ज्ञानप्रबोधेन तुर्यातीतप्रभास्वरमयज्ञानबिम्बमयत्वेन सर्वजन्तूनामुत्पादनात् प्रजानां जन्तूनां पतिः प्रजापतिः । ( अ० क० 8।5 )

प्रजापतिरिति । प्रति प्रति जायन्त इति प्रजा बोधिसत्त्वाः, तेषां पतिः प्रजापतिः स्वामी मञ्जुश्रीरेव । ( ना० अ० 8।5 )

पितृत्वाद्वै प्रजानां तु प्रजापतिरुदीरितः । ( शा० भा० 108 )
प्रजापतिर्मतः सर्वप्रजानामीश्वरत्वतः । ( शा० भा० 40 )
सर्वप्रजापालकत्वाद्विष्णुरेव प्रजापतिः ।
'प्रजापते न त्वदेतान्यन्यो विश्वे'त्यपि श्रुतेः ॥ ( प० वि० म० 69 )
प्रजानामपि सर्वासां पतिः स्वाम्यथवापि वा ।
अतः प्रजापतिर्विष्णुः श्रूयते त्वं प्रजापतिः ॥ ( प० वृ० म० 97 )

10. **ब्राह्मणः** ( वि० स० 84, ना० सं० 8।19 )

पञ्चाक्षररूपत्वाद् हंकारः पञ्चतथागतात्मको ब्राह्मणः, तन्नादमागम्य यावदुष्णीषलयेन सर्वविकल्पवातं बाहयतीति ब्राह्मणः । ( ना० अ० 8।19 )
ब्राह्मण इति । तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारणमिति । यतो भगवानेवापर्यन्तकाल-जनितेन तपसा, अपर्यन्तेन श्रुतेन युक्तत्वाद् अनास्रवमार्गोत्पत्तियोनेश्च गुणत्रयेण युक्त इति परो ब्राह्मणो भगवान् । अथवा मन्त्रब्राह्मणविभागेन द्विधा वेदः । यत्र योऽसौ ब्राह्मणात्मको वेदः स भगवान् मञ्जुश्रीः । तत्साध्यस्य कार्यस्य भगवतैव साध्यत्वात् । तद्रूपेणापि क्वचित् प्रतिभासते । ( ना० अ० 8।19 )

वेदप्रवचनं कुर्वन् विप्रात्मा ब्राह्मणो मतः । ( शा० भा० 361 )
ब्रह्मात्मना तु वेदस्य सर्वेषां ब्रह्मणात्मना ।
कुर्वन् प्रवचनं विष्णुर्ब्राह्मणो ब्रह्मणोदितः ॥ ( प० व० म० 67 )

11. **भगवान्** ( वि० स० 73, ना० सं० 5।1 )

महामुद्राद्वैतरूपत्वाद् भगवान् । ( अ० क० 5।1 )
षड्विधैश्वर्यपूर्णोऽसौ भगवानथ वेत्ति वा ।
भूतानामुत्पत्तिलयौ विद्याविद्ये गतागते ॥ ( शा० भा० 301 )
मोक्षैश्वर्ययशोधर्मश्रीवैराग्यानि षड्भगाः ।
यस्य सन्तीति भगवांस्तस्मै भगवते नमः ॥ ( प० क० म० 58 )

12. **भयनाशनः** ( वि० स० 102, ना० स० 8।16 )

सर्वाकारवरोपेतशून्यतासर्वप्रपञ्चभयविदारणान्निशेषभयनाशनः । ( अ० क० 8।16 )
निःशेषभयनाशन इति । निरवशेषभयान्यष्टौ महाभयानि हरिकरिशिखिफणीत्यादीनि, तेषां

निःशेषाणां भयानां नाशकत्वाद् निःशेषभयनाशनो भगवान् मञ्जुश्रीः, तदनुस्मरणमात्रेणाशेषभयनाशादिति । ( ना० अ० 8।16 )

वर्णाश्रमवतां भीतिं नाशयन् भयनाशनः । ( शा० भा० )
वर्णाश्रमाचारवतां भयं नाशयतीत्यसौ ।
भयनाशन इत्युक्तः स्मृतेर्विरचिताभयः ॥ ( प० अ० म० 34 )

13. **भास्करद्युतिः** ( वि० स० 43, ना० सं० 8।26 )

भाभिर्भास्करा द्युतिः पुञ्जरूपा यमान्तकादिक्रोधा तत्स्फरणरूपा द्युतिस्तत् क्रोधविनेयसत्त्वार्थं यस्य स तथा । ( अ० क० 8।26 )

भास्करद्युतिरिति । भाशब्दो रश्मिपर्यायोऽऽकारान्तोऽप्यस्ति । भास्वराश्च ते कराश्च भास्वरकराः । क्रोधदीधितयः । भानां भास्करा भाभास्कराः, तेषां द्युतिः भाभास्करद्युतिः । ततश्च क्रोधविनेयानां सत्त्वानां तदाकाररश्मिस्फरणमुखेन विनयनार्थं स एव भगवान् भाभास्करद्युतिरित्युच्यते । ( ना० अ० 8।26 )

भास्करद्युतिसाधर्म्याद् भास्करद्युतिरीरितः । ( शा० भा० 153 )
भास्करद्युतिसाधर्म्याच्छ्रीविष्णुर्भास्करद्युतिः ।
तथा च स्मर्यते भूरि कोटिसूर्यसमप्रभः ॥ ( प० स० म० 82 )

14. **भूतिः** ( वि० स० 80, ना० सं० 8।15 )

अविच्छिन्नसुखत्वाद्भूतिः । ( अ० क० 8।15 )
भूतिरिति सर्वविभूत्याधाररूप(भूत)त्वात् ।( ना० अ० 8।15 )
ज्ञानैश्वर्यादिरूपोऽयं भूतिः सत्तात्मकोऽथवा ।( शा० भा० 341 )
भूतिर्हि भवनं सत्ता विभूतिर्वार्थकारणात् ।
स च सर्वविभूतीनामितिभूतिर्हरिः स्वयम् ॥ ( प० श्री० म० 30 )

15. **महातपाः** ( वि० स० 26, ना० सं० 8।18 )

नित्यकमलकुलिशसंयोगाभ्यासेन बिन्दुमध्यषट्श्वासलयीकरणेन तस्य बिन्दोः कुलिशमुखे भक्षणलक्षणं महातपो यस्य सः । ( अ० क० 8।18 )

तत्र महातप इति । महत् तपो यस्यासौ महातपाः, तं लोभत्वमत्वा सद्धर्मानि दुष्करचर्यामवस्थानात् प्रदर्शकत्वं तु तद् विनेयानामावर्जनार्थम्, ततश्चासौ भगवान् महातपा इत्युच्यते । ( ना० अ० 8।18 )

तपः श्रेष्ठतपोयोगाद्धरिरुक्तो महातपाः । ( शा० भा० 68 )

महद्यत्सृज्यविषयं ज्ञानरूपं तपोऽस्य वै ।

महातपा विष्णुरिति यस्य ज्ञानमयं तपः ॥ ( प० वृ० म० 22 )

16. **महातेजाः** ( वि० स० 85, ना० सं० 6।21 )

महातेजोऽवभासो यस्य स महातेजाः । ( अ० क० 6।21 )

महातेज इति महत् तेजोऽवभासो यस्य स महातेजाः कृत्यानुष्ठानमुखेन । (ना०अ० 6।21)

महातेजा यदीयेन तेजसा भास्करादयः ।

तेजस्विनोऽथवा धर्मैः कौर्याद्यैः समलङ्कृतः ॥ ( शा० भा० 364 )

महदस्य भवेत्तेजो महातेजास्ततो हरिः ।

'येन सूर्यस्तपति तेजसेद्ध' इति च श्रुतेः ॥ ( प० श्री० म० 73 )

17. **महाद्युतिः** ( वि० स० 32, ना० सं० 5।7 )

ग्राह्यग्राहकप्रपञ्चरहितसुखानुभवद्योतनान्महाद्युतिः । ( अ० क० 5।7 )

महाद्युतिरिति । वज्राभासा महती त्रैधातुकप्रसर्पिणी ज्योतिर्दीप्तिर्यस्यासौ महाद्युतिः । ( ना० अ० 5।7 )

महती द्युतिर्बाह्याभ्यन्तरा चास्यास्तीति स महाद्युतिः । ( शा० भा० 96 )

महती द्युतिरस्यास्ति महाद्युतिरतो हरिः ।

'ज्योतिषामपि तज्ज्योतिः स्वयंज्योति'रिति श्रुतेः ॥ ( प० वृ० म० 76 )

18. **मनोजवः** ( वि० स० 87, ना० सं 6।7 )

महासुखोल्लासेन त्रैधातुकाक्रमणवेगो मनोजवः, तद्योगात् मनोजवः । ( अ० क० 6।7 )

मनोजव इति । एकक्षणेनैवाप्रमेयलोकधातोरतिक्रमणात् । ( ना० अ० 6।7 )

मनोवेगवद्वेगोऽस्य मनोजवः ( शा० भा० 372 )

मनसो हि जवो वेग इव वेगो हि चक्रिणः ।

अस्य सर्वगतत्वेन विष्णुः प्रोक्तो मनोजवः ॥ ( प० श्री० म० 90 )

19. **महाबलः** ( वि० स० 31, ना० सं० 5।12 )

पञ्चानन्तर्यादिपापकर्मणामपि महासुखैकनिष्ठीकरणान्महाबलपराक्रमः । ( अ० क० 5।12 )

महाबलपराक्रम इति । प्रतिमानकूटे महान्ति च तानि बलानि चेति दशतथागतबलानि स्थानास्थानज्ञानादीनि वक्ष्यमाणानि । ( ना० अ० 5।12 )

बलिनामपि चोत्कृष्टबलवत्त्वान्महाबलः । ( शा० भा० 94 )

बलवत्त्वेन विख्याता यतो बलिबलादयः ।

बलवत्त्वाच्च बलिनां निग्रहाच्च महाबलः ॥ ( प० वृ० म० 72 )

**20. महामायः** ( वि० स० 31, ना० सं० 5।8 )

रागविरागाभावेन महारागरूपमहामाया दिव्यमुद्रा । ( अ० क० 5।8 )

महामायो यतो मायाकारी मायाविनामपि । ( शा० भा० 93 )

महामायाकारितया महामायो हरिः स्वयम् ।

तथा च भगवद्वाक्यं 'मम माया दुरत्यया' ॥ ( प० वृ० म० 70 )

**21. महावीर्यः** ( वि० सं० 32, ना० सं० 5।9 )

परमधैर्यरूपत्वादस्य वामदक्षिणनासापुटदशमण्डलभङ्गेन श्वासवातस्यावधूतीप्रवेशो महावीर्यम् । ( अ० क० 5।9 )

महावीर्यपराक्रम इति । वज्रनृत्या वीर्यं कुशलेषु धर्मेषूत्साहं पापोत्साहेषु कुसीदत्वात् कौसीद्यमेव न वीर्यं तस्य ! पराक्रमः सर्वलौकिकलोकोत्तरकुशलमूलानां परिपूरणात् । (ना० अ० 5।9)

महावीर्यो वीर्यमस्य महदुत्पत्तिकारकम् । ( शा० भा० 95 )

महद्धि वीर्यं यस्यासौ महावीर्यो हरिः स्मृतः ।

'विष्णोर्वीर्याणि शंसन्ति विष्णोर्नु कमि'ति श्रुतेः ॥ ( प० वृ० म० 74 )

**22. मान्यः** ( वि० स० 93, ना० सं० 6।23 )

नित्यं बाह्याध्यात्मिकं मुद्रा सेवनेनातिक्रमणीयत्वाद् मान्यः । ( अ० क० 6।23 )

अत एव मान्यो माननीयः सर्वसत्त्वानाम् । ( ना० अ० 6।23 )

सर्वेश्वरः सर्वपूज्यो मान्य इत्यभिधीयते । ( शा० भा० 403 )

सर्वेश्वरत्वात् सर्वैश्च ससुरासुरमानवैः ।

माननीयः पूजनीयस्तेन मान्यो महागुरुः ॥ ( प० स० म० 49 )

**23. वरदः** ( वि० स० 49, ना० सं० 8।16 )

अविकल्पेन सर्वाभिप्रायपरिपूरणाद् वरदः ( अ० क० 8।16 )

वरद इति । वरं ददातीति वरदः, यथाभिप्रायपरिपूरणात् । (ना० अ० 8।16)

वरदः प्रियदानेन दक्षिणादानतोऽपि वा । ( शा० भा० 178 )

वरान् ददात्यभिमतान् भक्तेभ्यो वरदः स्मृतः ।

व्यासोक्तिरपि तत्रैव 'सुरासुरवरप्रदः' ॥ ( प० यु० म० 30 )

24. **विजयी** ( वि० स० 29, ना० सं० 6।7 )

वज्ररत्नशिखरे सर्वविकल्पवायुविजयित्वाद् विजयी । ( अ० क० 6।7 )

विजयीति । विजयो यस्यास्तीति विजयी । ( ना० अ० 6।7 )

विजयी विश्वविजयाज्ज्ञानैश्वर्यादिभिर्गुणैः । ( शा० भा० 81 )

ऐश्वर्यज्ञानवैराग्यादिभिः शुभगुणैर्हरिः ।

यतो विजयते विश्वमित्यसौ विजयाभिधः ॥ ( प० वृ० म० 47 )

25. **विदारणः** ( वि० स० 62, ना० सं० 6।13 )

हेयोपादेयविकल्पजालं विदारयतीति विदारणः । ( अ० क० 6।13 )

प्रज्ञा धर्मप्रविचयलक्षणात्मिका, सैव शास्त्रम्, सर्वक्लेशनिकृन्तनत्वात् । ( ना० अ० 6।13 )

विदारणोऽधार्मिकान् यो विदारयति धर्मतः । ( शा० भा० 252 )

विदारयति वेदोक्तधर्मविच्युतमानसान् ।

विष्णुर्विदारणस्तेन गदितो वेदकोविदैः ॥ ( प० वी० म० 64 )

26. **विधाता** ( वि० स० 18, 64, ना० सं० 6।23 )

यथा भव्यतया सर्वमन्त्रमुद्राभिसमयमण्डलोत्सङ्गादिकरणाद्विधाता ( अ० क० 6।23 )

विधाता चेति सर्वसत्त्वानां यथा भव्यरूपतयासर्वमन्त्रमुद्राभिसमयमण्डलौत्सर्गात् ।

( ना० अ० 6।23 )

विधाता धारयन् धातॄन् शेषदिग्गजभूधरान् ।

कृतान्यनेन शास्त्राणि यद्वा श्रीवत्सलक्षणम् ॥

कृतं वक्षसि लोकानां यद्वा व्यावृत्तधर्मकृत् । ( शा० भा० 260-61 )

विधाता कर्मफलकृद्यद्वानन्तादि धारकः ॥ ( शा० भा० 25 )

विदधाति विधाताऽयं शेषदिग्गजभूधरान् ।

'धाता विधाता परमोत् सन्दृगिति' याजुषी ॥ ( प० वी० म० 84 )

27. **विभुः** ( वि० स० 39, ना० सं० 6।4, 8।13 )

तद्रूपत्वाल्लौकिकलोकोत्तरार्थव्याप्तिरूपत्वाद्विभुः । ( अ० क० 8।13 )

सहजचण्डाल्यालोकेन त्रिलोकव्यापनाद्विभुः । ( अ० क० 6।4 )

विभुरिति माहात्म्यस्थिरचलसर्वभावस्वभावत्वात् । ( ना० अ० 6।4 )

हिरण्यगर्भादिनानारूपेण भवनाद्विभुः । ( शा० भा० 130 )

हिरण्यगर्भादिरूपाद्विविधो भवतीति च ।

विष्णर्विभुरिति प्रोक्तो 'नित्यं विभुमि'ति श्रुतेः ॥ ( प० स० म० 40 )

28. व्यापी ( वि० स० 63, ना० सं० 8।21 )

स्थिरचलस्वभावत्वाद्व्यापी । ( अ० क० 8।21 )
व्यापीति स्थिरचलपदार्थस्वभावात् । ( ना० अ० 8।21 )
व्यापी सर्वगतः प्रोक्तः सर्वेष्वनुगतोऽपि वा । ( शा० भा० 253 )
व्यापी स्यात् सर्वकार्याणां व्यापनात् कारणत्वतः ।
'आकाशवत् सर्वगत' इत्यादि श्रुतिबोधनात् ॥ ( प० वी० म० 67 )

29. वाग्मी ( वि० सं० 42, ना० सं० 6।9 )

सर्वधर्मनैरात्म्यप्रकाशनात् वाग्मी । ( अ० क० 6।9 )
वाग्मीति प्रवक्ता धर्मप्रतिसंविल्लाभात् । ( ना० अ० 6।9 )
वाग्मी ब्रह्ममयी यस्माद्वागुत्सृष्टा स्वयम्भुवा । ( शा० भा० 144 )
यतो हि वाग्ब्रह्ममयी श्रीमद्विष्णोर्विनिस्सृता ।
तेनायं कथ्यते वाग्मी तस्य वन्दे पदाम्बुजम् ॥ ( प० सं० म० 67 )

30. वाचस्पतिः ( वि० स० 36, ना० सं०, 6।9 )

वज्रजापादिना सत्सुखप्राप्तेर्वाचस्पतिः । ( अ० क० 6।9 )
वाचस्पतिरिति । प्रतिभान् प्रतिसंविल्लाभात् साधुमत्यां भूमौ चतुःप्रतिसंविल्लाभात् । ( ना० अ० 6।9 )
विद्यायाः पतिरेवं तत्सर्वार्थविषयिण्यपि । ( शा० भा० 118 )
यः पतिः सर्वविद्यानां जनन्यां च न जायते ।
पदद्वयं च नामैकं वाचस्पतिरयोनिजः ॥ ( प० क० म० 73 )

31. वीरः ( वि० स० 82, ना० सं० 10।9 )

वज्रासनत्वेन प्राणापाननिरोधान्मारजिदजयः अत एव वीरः । ( अ० क० 10।9 )
वीरः शूरोऽस्य विगते शत्रोः कम्पपलायने । (शा० भा० 348)
वीरो विक्रमशालित्वाद्वीरत्वं श्रीहरेः स्फुटम् ।
श्रूयते हरिवंशादौ कंससाल्वादिमर्दनात् ॥ (प० वी० म० 1)

32. शताननः (वि० स० 90, ना० सं० 7।1)

शतमनन्तानि आननानि सुखज्ञानानि यस्य सः । (अ० क० 7।1)
शतानन इति । वज्रशेखरतन्त्रे शतान्याननानि मुखानि यस्य स शताननः । (ना० अ० 7।1)

यतो विश्वादिमूर्तित्वमत एव शतानन: । (शा० भा० 389)

यतो विश्वादिमूर्तित्वमस्योक्तं पूर्वनामभि: ।

आननानि शतं यस्य स गोपाल: शतानन: ॥ (प० स० म० 24)

33. **शरणम्** (वि० स० 23, ता० सं० 8।6)

पञ्चभूतानां महासुखनिष्ठीकरणात् शरणम् । (अ० क० 8।6)

शरणमिति शरणार्थिनां शरण्यत्वात् । (ना० अ० 8।6)

आर्तार्तिहृत्त्वाच्छरणम् । (शा० भा० 48)

'शरणं भव भूतेशे'त्यादिस्मृतिषु भाषितम् ।

भक्तानामार्तिहरणाद्रक्षणाच्छरणं हरि: ॥ (प० वि० म० 86)

34. **शास्ता** (वि० स० 35, ना० सं० 1।9)

षट्शताधिकैकविंशतिसहस्रश्वासानां महासुखाभिन्नत्वेन शासनात् शास्ता । (अ० क० 1।9)

शास्ता जगदनुशासनात् । (ना० अ० 1।9)

शास्ताऽनुशास्ति य: सर्वान् श्रुतिस्मृत्यागमादिभि: । (शा० भा० 112)

सर्वेषां शासनं कुर्वन् श्रुतिस्मृतिनिजाज्ञया ।

'शास्ता जनानामि'त्यादिश्रुते: शास्ता हरि: स्वयम् ॥ (प० स० म० 6)

35. **शाश्वत:** (वि० सं० 20, ना० सं० 6।17)

प्रभास्वरनिष्ठतयाऽच्युतसुखत्वात् शाश्वत: । (अ० क० 6।17)

तत्र शाश्वत इति प्रबन्धनित्यता । आसंसारावस्थानाद् धर्मधातुस्वभावस्यानपायित्वादित्यभिप्राय: । (ना० अ० 6।17)

शाश्वत: सर्वकालेषु भावनादच्युतो हरि: । (शा० भा० 33)

शश्वत्सर्वेषु कालेषु भवतीति च शाश्वत: ।

याजुषी श्रुतिरत्रापि 'शाश्वतं शिवमच्युतम्' ॥ (प० वि० म० 56)

36. **शिखण्डी** (वि० स० 47, ना० सं० 8।17)

चर्ममांसरक्तानि मातृसूर्यसम्बद्धानि, अस्थिस्नायुशुक्राणुपितृचन्द्रसम्बद्धानि, तदद्वययोग: शिखण्ड:, तस्य निरावरणयोगेन योगाच्छिखण्डी । (अ० क० 8।17)

शिखण्डीति कार्तिकेयरूप: । (ना० अ० 8।17)

शिखण्डी पिच्छभूषित: । (शा० भा० 167)

शिखण्डोऽपि कलाप: स्याद्यदलङ्करणं हरे: ।

शिखण्डीति स विख्यातो गोपवेषधरो हरि: ॥ (प० यु० म० 11)

37. **श्रीमताम्वरः** (वि० स० 77, ना० सं० 10।12)

ज्ञानकायत्वेन श्रीमतां वर इति। (अ० क० 10।15)

श्रीमतां वर इति। तद्वतां श्रेष्ठ इत्यर्थः। (ना० अ० 10।15)

त्रयीमतो विरिञ्च्यादेः प्रधानः श्रीमताम्वरः। (शा० भा० 328)

त्रयी श्रुतिः श्रीः श्रीमन्तो ब्रह्माद्याः श्रीमताम्वरः।

'ऋचः सामानि यजूँषि सा हि श्रीरमृता' श्रुतेः॥ (प० व० म० 4)

38. **श्रीमान्** (वि० स० 32,78, ना० सं० 9।2, 10।15)

सर्वयोगिनां प्रियरत्नाच्युतत्वात् श्रीमान्। (अ० क० 10।15)

उष्णीषादुच्छलितबोधिचित्तधारया सर्वाङ्गव्यापनेन लौकिकलोकोत्तरसम्पत्तिमान् श्रीमान्। (अ० क० 9।2)

श्रीमानिति भाग्यसम्पन्नत्वात्। (ना० अ० 10।15)

समग्रैश्वर्यरूपश्रीयुक्तः श्रीमानुदीर्यते। (शा० भा० 9;)

श्रीमान् विभूतयः शोभा धियो वास्येत्यतो मतः। (शा० भा० 332)

यां श्रयन्ते सर्वजनाः श्रीर्लक्ष्मीः शुभलक्षणा।

सा वै वक्षसि यस्यास्ते स श्रीमान् विष्णुरुच्यते॥ (प० वि० म० 22)

सर्वभोगैकनिलयो या श्रीरैश्वर्यलक्षणा।

समग्रा यस्य स श्रीमान् विष्णुर्मुनिभिरीडितः॥ (प० वृ० म० 79)

सर्वातिशयरूपा श्रीः कान्तिरस्यैव विद्यते।

तस्माच्छ्रीमान् हरिरिति विश्वविख्यातिमागतः॥ (प० स० म० 20)

यस्य सन्ति श्रियः सर्वाः समस्तैश्वर्यलक्षणाः।

स श्रीमानिति विद्वद्भिर्विनिर्दिष्टो विशेषतः॥ ( (प० व० म० 13)

39. **श्रेष्ठः** (वि० स० 21, ना० सं० 8।16; 27, 6।24)

शून्यताकरुणाभिन्नाग्रत्वात् श्रेष्ठः। (अ० क० 8।16)

श्रेष्ठ इति बाह्यश्रावकादीनामुत्तमत्वात्। (ना० अ० 8।16)

श्रेष्ठः सर्वाधिको वायुः प्रशस्यतम ईरितः। (शा० भा० 40)

श्रेष्ठो विष्णुः 'प्रशस्यस्य श्र' इतिश्रविधानतः।

प्रशस्यतम इत्युक्तस्तस्मै श्रेष्ठाय वै नमः॥ (प० वि० म० 68)

40. **सत्कृतिः** (वि० स० 88, ना० सं० 8।15)

परमार्थाभिषेकः सत्काररूपत्वात् सत्कृतिः। (अ०क० 8।15)

सत्कृतिरिति । करणं कृतिः, सतां कृतिः सत्कृतिः । सन्तो हि श्रावकादयस्तेषां यथार्हंप्रतिपत्तिः ।
(ना० अ० 8।15)

सत्कृतिर्यस्य हि जगद्रक्षणाद्युत्तमा कृतिः । (शा० भा० 377)
ब्रह्मादिभिः पूज्यतेऽयं सर्वलोकैकपूजितैः ।
अतस्तं सत्कृतं प्राहुर्विष्णुं विष्णुपरायणाः । (प० स० म० 42)

41. **सर्वगः** (वि० स० 27, ना० सं० 8।21

ज्ञानाकाशरूपत्वात् सर्वगः । (अ०क० 8।2)
सर्वग इति सर्वगतत्वात् । (ना० अ० 8।21)
कारणत्वेन सर्वत्र व्याप्तत्वात् सर्वगो मतः । (शा० भा० 68)
व्याप्तत्वात् कारणत्वेन स सर्वं गच्छतीत्यसौ ।
'सर्वत्रगमचिन्त्यं चे'त्येवं स्मृत्यापि सर्वगः ॥ (प० वृ० म० 23)

42. **सर्वज्ञः** (वि० स० 61, 100, ना० सं० 8।22)

रूपादिस्कन्धादीनां सहजस्वरूपावगमाद् विबुद्धात्मज्ञानरूपेण सर्वधर्माणां संस्थापनात् सर्वज्ञः
(अ० क० 8।22)

सर्वज्ञ इति । सर्वं निरवशेषं ज्ञेयं जानातीति सर्वज्ञः । (ना० अ० 8।22)

सर्वज्ञः सर्वविज्ञानात् । (शा० भा० 442)
सर्वज्ञः सर्वरूपत्वाज्ज्ञानरूपतयापि वा । (शा० भा० 446)
'इदं सर्वं यदयमात्मे'त्यादिश्रुतिबोधनात् ।
सर्वश्चासौ तथा ज्ञश्च सर्वज्ञः समुदीरितः ॥ (प० वी० म० 53)

43. **सर्ववित्** (वि० स० 27, ना० स० 9।15)

सर्वबुद्धमयभावग्रामावबोधात् सर्ववित् । (अ० क० 9।15)
वेत्ति सर्वं विन्दते वा यः सर्वः स हि सर्ववित् । (शा० भा० 69)
भातीति भानुर्निर्दिष्टः सर्वं वेत्तीति सर्ववित् ।
सर्वविच्चाप्यसौ भानुः सर्वविद्भानुरुच्यते ॥ (प० वृ० म० 24)

44. **सिद्धसङ्कल्पः** (वि० स० 40, ना० सं० 6।15)

सिद्धो नित्यमामुखीकृत्य सङ्कल्पो ग्राह्यग्राहकविकल्पो यस्य स तथा । (अ० क० 6।15)
सिद्धसङ्कल्प इति । संकल्प्यत इति संकल्पः, सिद्धश्चासौ संकल्पश्च सिद्धसंकल्पः ।
(ना० अ० 6।15)

हरिर्वै सिद्धसङ्कल्पः सत्यसङ्कल्पवत्तया । (शा० भा० 137)
सिद्धो निष्पन्नरूपो हि संकल्पोऽस्येति केशवः ।
सिद्धसङ्कल्प इत्युक्तः सत्यसङ्कल्पताश्रुतेः ॥ (प० स० म० 53)

45. **सिद्धार्थः** (वि० सं० 40, ना० सं० 6।15)

सर्वधर्माणां ज्ञानाकारेण प्रतिभासकत्वात् सिद्धो निष्पन्नोऽर्थः परमार्थो यतो यस्य वा स तथा । (अ० क० 6।15)

तत्रार्थ्यंत इत्यर्थः रूपादिविषयः । स च (सर्व) ग्राह्यग्राहकभावेनातीवलोकप्रसिद्धः । सिद्धश्चासावर्थश्च सिद्धार्थः । तथा हि बहिरर्थतया विकल्पितभावानां रूपादीनामात्मनो जातिगुणक्रियादीनां वा लक्षणानां तत्त्वतोऽभिनिवेशः परिकल्पितस्वभावः । (ना० अ० 6।15)

सिद्धा यस्यार्थ्यमानार्था यतः सिद्धार्थ उच्यते । (शा० भा० 136)
निर्वृतश्चार्थ्यमानोऽर्थः सिद्धो यस्य स वै हरिः ।
सिद्धार्थ इति सम्प्रोक्तः 'सत्यकाम' इति श्रुतेः ॥ (प० स० म० 52)

46. **सुदर्शनः** (वि० स० 58, ना०सं० 8।26)

शोभनं दर्शनं सहजसुखसाक्षात्कारो यस्य स तथा । (अ० क० 3।26)

सुदर्शन इति । शोभनं दर्शनं यस्य स सुदर्शनः । शोभनं युक्तियुक्तत्वात् ॥ (ना० अ० 8।26)

दर्शनं वास्य निर्वाणफलमेव सुदर्शनः । (शा० भा० 227)
सुशोभनं तु निर्वाणफलं ज्ञानं हि दर्शनम् ।
यस्येति यस्माद्वा विष्णुः स सुदर्शन उच्यते ॥ (प० वी० म० 17)

47. **सुन्दरः** (वि० स० 98, ना०सं० 8।5)

स्वाधिष्ठानस्फुटीभावेनासेचनकरूपत्वात् त्रैलोक्येन कायत्रैलोक्यत्वेन सुन्दरः । (अ० क० 8।5)

त्रैलोक्यसुन्दर इति । त्रैलोक्यं पूर्ववत् । तस्मात् ( तस्मिन् ) सुन्दरो दर्शनीयः, आसेचनकविग्रहत्वात् । अत्र आश्रयविशेषो रूपासेचनकतया वेदितव्यः । स हि भगवानङ्गप्रत्यङ्गेषु चिरमपि दृश्यमानोऽपूर्व इव पश्यतां प्रीत्यासेचनात् । आसेचनको रूपेणेत्युच्यते (ना० अ० 8।5)

विश्वातिशयिसौभाग्यशालित्वात् सुन्दरो मतः । (शा० भा० 426)
विश्वातिशयिसौभाग्यशालित्वाज्जगदीश्वरः ।
सुन्दरः स्मृतिवाक्तत्र सुन्दरं मुखमन्दिरम् ॥ (प० स० म० 91)

# बौद्ध तन्त्रों में वज्रदेह का स्वरूप

—डॉ० ठाकुरसेन नेगी—

[ "धीः" के प्रथम, द्वितीय और तृतीय अंक में शरीर में स्थित नाड़ी वायु और बिन्दु का वर्णन किया गया है। अब प्रस्तुत निबंध में उक्त नाड़ी एवं वायु को आधार बनाकर अविशुद्ध शुक्ररूपी बिन्दु द्वारा किस प्रकार सांसारिक देह की निष्पत्ति होती है, इसका वर्णन किया जा रहा है।]

वज्रयानी साधक जब किसी साधना का अनुष्ठान—विशेषकर नाड़ी-वायु-भावना एवं उत्पत्तिक्रम का अभ्यास आदि करता है, तो उसे अपने देह के बारे में सम्यक् जानकारी प्राप्त करना आवश्यक होता है, क्योंकि दैहिक क्रियाओं को बाँधकर तदाश्रित चित्त की वस्तुस्थिति का साक्षात्करण वज्रयानी साधना-पद्धति की विशेषता है। दैहिक क्रियाओं को बाँधने के लिए देह का समग्र रूप में अध्ययन आवश्यक है। निष्पन्न देह का ही नहीं, प्रत्युत गर्भाधान से लेकर उसके विकास-क्रम की विभिन्न अवस्थाओं के अध्ययन की भी अपेक्षा रहती है। इसलिए वज्रदेह की निष्पत्ति के अध्ययन का क्षेत्र गर्भाधान की प्रारम्भिक अवस्था से लेकर देह की पूर्णरूपेण निष्पत्ति पर्यन्त समझना चाहिये।

वज्रयानियों के अनुसार चित्त संसार एवं निर्वाण समस्त धर्मों का मूलकारण है। दूसरे शब्दों में चित्त वज्रयानी तत्त्वमीमांसा का केन्द्र-बिन्दु है। इसीसे संसार, निर्वाण आदि समस्त धर्मों की व्यवस्था होती है।

### चित्त का स्वरूप तथा विवेचन

वज्रयानियों के अनुसार समस्त धर्म संसार एवं निर्वाण में संगृहीत हैं। चित्त संसार एवं निर्वाण दोनों का मूलकारण है। उक्त चित्त को तन्त्रागमों में अनादिनिधन, प्रपञ्चातीत, शाश्वत-उच्छेदान्त, अपतित, धर्मता, तथता आदि अनेक विशेषण पदों से विभूषित किया गया है।[1]

वज्रयानी ग्रन्थों में आलय शब्द का प्रयोग उक्त चित्त के स्थान पर बहुधा देखने को मिलता है। उक्त चित्त अथवा आलय के द्विविध अवान्तर भेद करते हुए वज्रयानी साधक सुविशुद्ध अंश को आलय-ज्ञान एवं सर्व बीजक अंश को आलय-विज्ञान के नाम से व्यवहृत करते हैं। उनके अनुसार तथागतगर्भ, दोहाकोश में उक्त चिन्तामणिसदृश चित्त, अभिधर्मसूत्र में उक्त अनादिकालिक धातु

1. आदि महाअनाहत बिन्दु, प्रज्ञापारमिता, महामुद्रा, नित्यज्ञान आदि इसके अन्य पर्यायवाची शब्द हैं।
—गूढार्थदीपिका, तिब्बती संस्करण।

आदि आलय-ज्ञान के ही अपर नाम हैं। आलय-ज्ञान निर्वाण का सजातीय कारण तथा संसार का अधिपति कारण प्रत्यय है। उनके अनुसार आलय-ज्ञान आलय-विज्ञान में दूध में पानी के सदृश मिश्रित रूप में रहता है। इस कारण मूढ जन आलय-विज्ञान के स्वरूप को ग्रहण नहीं कर पाते। फलतः वे षड् विज्ञानों को ही स्वीकार करते हैं। आठ विज्ञान स्वीकार करने वाले भी आलय को विज्ञान के रूप में ही ग्रहण करते हैं, न कि ज्ञान के रूप में।

संक्षेप में आलय-ज्ञान एवं आलय-विज्ञान के रूप में आलय की द्विविध अवान्तर व्यवस्था वज्रयानियों की निजी स्थापना है।

## सांसारिक देह की निष्पत्ति

आलय-विज्ञान एवं महाप्राण वायु से युक्त सत्त्व के त्रिधातु (त्रिलोक) में उत्पन्न होने से वज्रयानी साधक वज्रदेह—शरीर की निष्पत्ति (सिद्धि) मानते हैं। सत्त्व जितनी बार उत्पन्न होता है, उतने ही अनुपात में विभिन्न वासनाओं के बीज आलय-विज्ञान से अभिसंबद्ध होते हैं। यह योग किस प्रकार होता है? अभिसंस्कार से चंचल चित्त तृष्णा लक्षण से युक्त होने के कारण वासना बीज से योग करता है। वज्रयान में इसे प्राणवायु कहा गया है। यही प्राणवायु सत्त्वों में प्रतिसन्धि ग्रहण तथा चित्त को चंचल करता है। इस प्रकार विभिन्न वासनाओं से युक्त बीजों के आलय-विज्ञान से युक्त होने पर सत्त्व त्रिधातु की चार योनियों में से किसी एक योनि में उत्पन्न होता है।

### 1. सत्त्व की अरूपधातु में उत्पत्ति

सत्त्वों के चित्तों के अभिसंस्कार एवं साक्षेप कर्मों से युक्त होने तथा आकाशानन्त्यायतन, विज्ञानानन्त्यायतन, अकिंचनानन्त्यायतन एवं नैवसंज्ञानासंज्ञायतन इन चार समापत्तियों में से किसी एक के मौल को प्राप्त होने से आलय-विज्ञान द्वारा आकाशानन्त्यायतन आदि किसी एक भूमि में देव या ब्रह्म आदि के रूप में प्रतिसन्धि ग्रहण करना सत्त्व का अरूप धातु में उत्पाद कहा जाता है, जो वासनायुक्त कहलाता है[1]। यहाँ उत्पन्न सत्त्व आर्य के अलावा क्लेशयुक्त पृथग्जन आदि भी होते

1. आरूप्यधातुस्थानं च उपपत्त्या चतुर्विधम्।
निकायं जीवितं चात्र मिश्रिता चित्तसन्ततिः॥

—अभिधर्मकोश तृतीय कोशस्थान।

लोक निर्देश रूपी धर्म, अतीत-अनागत रूपी धर्म तथा अविज्ञप्ति और अरूपी धर्म अदेशस्थ है, किन्तु उपपत्ति वश यह चतुर्विध है :—
आकाशानन्त्यायतन, विज्ञानानन्त्यायतन, अकिंचनानन्त्यायतन, नैवसंज्ञानासंज्ञायतन (या भवाग्र) आरूप्य धातु हैं। अतः यह आरूप्य चार प्रकार का है। "उपपत्ति" कर्मनिर्वृत्त जन्मान्तर की स्कन्धप्रवृत्ति समझनी चाहिये। एक ही कर्म से इन विविध आयतनों का लाभ नहीं होता। यह आयतन एक दूसरे से ऊर्ध्व में स्थित हैं, किन्तु इनमें देशकृत उत्तर और अधर भाव नहीं है। जिस स्थान में समापत्ति से समन्वागत आश्रय का भरण होता है, उस स्थान में उक्त

हैं, अतः यह मनोमय काय है। सत्त्व के अरूप धातु में उत्पन्न होने का तात्पर्य अस्थूल देह से है। सूक्ष्म देह का वर्णन सूत्र और तन्त्र दोनों में विस्तार से मिलता है।

सत्त्व के आकाशानन्त्यायतन समाधि से समुत्थित होकर परधातु में च्युति होने को परविकल्प ( परकल्पना ) कहा गया है। इसप्रकार इसे च्युति ( मृत्यु ) की संज्ञा से भी व्यवहृत किया गया है। इस धातु में आर्यों की सचिन्त्योपपत्ति नहीं होती, अर्थात् इस धातु में आर्यों की उत्पत्ति होती है, किन्तु जानबूझ कर नहीं।

## 2. सत्त्व की रूपधातु में उत्पत्ति

सत्त्व अपने अभिसंस्कार चित्त या विज्ञान द्वारा ध्यान के मौल या समापत्ति के सास्रव होने के कारण चार रूपी ध्यानों में से किसी एक को विषय बना कर उपर्युक्त रूप धातु में उत्पन्न होता है। रूप के अहंकार से युक्त होने के कारण इसमें उत्पन्न सत्त्व रूपीसत्त्व कहलाते हैं, जो कामधातु के सत्त्व से विशिष्ट हैं। काम, तृष्णा या स्थूल प्रत्यक्ष का उपघात करने के कारण रूपधातु के सत्त्वों का सम्पूर्ण शरीर उपपादुक होता है। उपर्युक्त दो धातुओं में उत्पन्न होने के हेतु दो अभिसंस्कार कर्म हैं, यथा :—1, आक्षेपण कर्म तथा 2, उपपत्ति कर्म। इनमें प्रथम आक्षेपण कर्म सामन्तक समापत्ति तथा द्वितीय उपपत्ति कर्म मौल समापत्ति है। स्थूल और सूक्ष्म के भेद से इन दोनों के दो-दो भेद होते हैं। स्थान के आधिपत्य से चार ध्यानभूमियों द्वारा भेद करने पर कुल 8 स्थान होते हैं। मृदु, मध्य एवं अधिमात्र के भेद से चार ध्यान ($4 \times 3 = 12$) बारह हो जाते हैं।

प्रथम ध्यान के मृदु सामन्तक और मौल के प्राप्त होने पर ब्रह्मकायिक सत्त्व के रूप में उत्पाद होता है। मध्य सामन्तक प्राप्त होने पर ब्रह्मपुरोहित तथा अधिमात्र में सामन्तक और मौल प्राप्त होने पर महाब्रह्म के रूप में सत्त्व उत्पन्न होता है।

द्वितीय ध्यान-भूमि में भी मृदु, मध्य एवं अधिमात्र के भेद से परीताभ, अप्रमाणाभ एवं आभास्वर देव के रूप में उत्पन्न होता है।

तृतीय ध्यान-भूमि में भी मृदु, मध्य एवं अधिमात्र के भेद से सत्त्व क्रमशः परीतशुभ, अप्रमाणशुभ एवं शुभकृत्स्न के रूप में उत्पन्न होता है।

चतुर्थ ध्यान-भूमि में भी मृदु, मध्य एवं अधिमात्र के भेद से सत्त्व अनभ्रक, पुण्यप्रसव एवं बृहत्फल देव के रूप में उत्पन्न होता है। रूपधातु के 16 स्थानों में से शेष चार स्थान शुद्धावास-

---

उत्पत्ति की प्रवृत्ति होती है। उस स्थान में उस उपपत्ति के अन्त में अन्तराभव का उत्पाद होता है, जो (कामधातु या रूपधातु) जन्मान्तर को ग्रहण करता है।

—अभिधर्मकोशभाष्य, तृतीय कोशस्थान।

भूमि के नाम से जाने जाते हैं। इस शुद्धावास-भूमि में उत्पाद के हेतु अनास्रव चतुर्थ ध्यान की प्रज्ञा से सम्बद्ध अभिसंस्कार हैं।[1]

### 3. सत्त्व की कामधातु में उत्पत्ति

रूप, शब्द आदि पाँच काम-गुणों का समान उपयोग होने से कामधातु के षट्जाति गति (देव, असुर, मानव, नरक, प्रेत एवं तिर्यग् आदि) के सभी तत्त्व पृथिवी, अग्नि, अप्, वायु, आकाश एवं सुखज्ञान नामक 6 धातु युक्त हैं। इस प्रकार ये षड्धातु युक्त हैं, क्योंकि सूक्ष्म कृमि चटक से लेकर स्थूल परिनिर्मित वशवर्ती देव तक सब समान हैं।[2] वे सत्त्व कामधातु लोक में जरायुज, अण्डज, संस्वेदज एवं उपपादुक इन चार योनियों में से किसी एक में उत्पन्न होते हैं। महासंवरोदय तन्त्रराज में कहा भी है—

चतस्रो योनयो भूता नानाकर्मस्वभावतः।
अण्डजाश्च जराय्वश्च सस्वेदा उपपादुकाः॥ 2॥

---

1. ऊर्ध्वं सप्तदशस्थानो रूपधातुः पृथक् पृथक्।
ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम्॥ 2॥

—अभिधर्मकोश।

अत ऊर्ध्वं रूपधातुः। सप्तदशस्थानान्तराणि। प्रथमध्यानस्य स्थानद्वयं भूमिद्वयम्—ब्रह्मकायिकी, ब्रह्मपुरोहिता।
द्वितीय ध्याने त्रीणि स्थानान्तराणि तिस्रो भूमयः—परीताभाः, अप्रमाणाभाः, आभास्वराः।
तृतीयध्याने त्रीणि स्थानान्तराणि—परीतशुभाः, अप्रमाणशुभाः, शुभकृत्स्नाः।
चतुर्थध्याने अष्टौ स्थानान्तराणि—अनभ्रकाः, पुण्यप्रसवाः, बृहत्फलाः, अवृहाः, अतपाः, सुदृशाः, सुदर्शनाः, अकनिष्ठाः। महाब्रह्मणोऽसंज्ञिसत्त्वनवभूमिकानन्तरं स्थानशब्देन भूमय उक्ताः। तेन त्रयोविंशतिदेवस्थानानि देवभूमयः।

—चतुष्पीठमहातन्त्रटीका, योगपीठ, प्रथम पटल।

2. नरकप्रेततिर्यञ्चो मानुषाः षड् दिवौकसः।
कामधातुः सः नरकद्वीपभेदेन विंशतिः॥ 1॥

—अभिधर्मकोश

नरक और द्वीपों के भेद से कामधातु के 20 स्थान होते हैं। इनमें 8 नरक, 4 द्वीप, 6 देव-निकाय और इनके अतिरिक्त प्रेत और तिर्यक् हैं। अतः अवीचि से परिनिर्मित वशवर्तिन लोक तक 20 स्थान होते हैं। भाजन लोक के साथ, जिसका आधार भाग वायुमण्डल है, यह कामधातु है। 8 नरक :—संजीव, कालसूत्र, संघात, रौरव, महारौरव, तपन, प्रतापन, अवीचि। 6 देवनिकाय :—चातुर्महाराजिक, त्रायस्त्रिंश, याम, तुषित, निर्माणरति तथा परिनिर्मित-वशवर्तिन्।

हंसक्रौञ्चमयूराश्च शुकसार्यादयोऽण्डजाः ।
हस्त्यश्वगोमाहिषाश्च मानुषाश्च जरायुजाः ॥ 3 ॥
कृमिकीटपतङ्गाश्च मशकादिस्तु स्वेदजाः ।
देवनरकसत्त्वाश्च अन्तराभव एव च ॥ 4 ॥
—उत्पत्तिनिर्देशपटल

## वज्रयान के आधार पुरुष का परिचय

इसके दो भेद हैं—

1. वज्रयान का हीन आधार
2. वज्रयान का श्रेष्ठ आधार

### 1. वज्रयान का हीन आधार

षड् गति, जाति आदि में उत्पन्न सत्त्व षड्धातु युक्त है, लेकिन त्रिद्वीप से अन्य दुर्गति एवं देवादि भी वज्रयान के हीन आधार हैं। इसलिए त्रिदुर्गति अक्षणवास में उत्पन्न होने के कारण देव, असुर, उत्तरकुरु के लोग वज्रयान के हीन आधार हैं, क्योंकि वे मात्र पूर्व जन्म में किये गये कुशल कर्मों के फल, अर्थात् सुख का इस जन्म में उपभोग करते हैं। इस जन्म में शुभ के हेतु एवं महाबल-शाली प्रतिपक्ष के हेतु हीन होने के कारण वे प्रतिमोक्षसंवर के आधार नहीं हो सकते हैं। अतः त्रिदुर्गति में कुशल चित्त का उत्पन्न होना दुर्लभ है तथा केवल अकुशल (अपुण्य) के फल अर्थात् दुःख का ही उपभोग कर लज्जा एवं अनपत्राप्य होने से इसे ( त्रिदुर्गति को ) अक्षण कहा गया है। देवादि तीन सत्त्वों का पुण्य का उपभोग करने से उस सुख से चित्त विक्षिप्त होता है। इसलिए प्रतिपक्ष के उत्पादक हेतु के हीन होने के कारण वे वज्रयान के हीन आधार हैं। बुद्ध लोग यहां पर द्वादशाकार-नामनय इत्यादि का प्रदर्शन नहीं करते। अतः ये वज्रयान के हीन कल्प भी कहे गये हैं।

### 2. वज्रयान का श्रेष्ठ आधार

वज्रयानी साधकों के अनुसार पूर्वविदेह, दक्षिण जम्बूद्वीप एवं अपरगोदानीय इन त्रिद्वीपों में उत्पन्न षड्धातु युक्त सत्त्व वज्रयान एवं प्रातिमोक्ष के पात्र हैं। इसलिए यह वज्रयान के श्रेष्ठ आधार हैं। इन तीनों में भी जम्बूद्वीप में उत्पन्न सत्त्व वज्रयान के सर्वश्रेष्ठ आधार हैं, क्योंकि इस जन्म में कृत कर्म के फल का इस जन्म में ही परिपाक होने से वह कोई भी प्रसिद्ध कार्य करने की क्षमता (योग्यता) रखते हैं। इसलिए यहाँ उत्पन्न सत्त्व एक जन्म एवं एक ही शरीर में बुद्धत्व प्राप्त करने के उपदेश की पात्रता रखते हैं।[1] तात्पर्य यह है कि प्राचीन काल में हीनयान और महायान के अनुसार

---

1. एत उपपादुकसत्त्वाः प्रथमकल्पिकादयः ।
पूर्वविदेहोऽपरगोदानिर् उत्तरकुरु एव च ॥ 5 ॥

अनेक जन्मों में बुद्धत्व प्राप्ति सम्भव थी, किन्तु वज्रयानी साधक अपनी साधना द्वारा इसे (बुद्धत्व को) इसी जन्म में सरलता पूर्वक प्राप्त कराने का दावा करते हैं ।[1]

अतः बुद्धमतानुयायी इस द्वीप में द्वादशाकरनामनय का प्रदर्शन करते हैं। इस प्रकार त्रिधातु में 31 भव हैं—अरूपधातु में 4, रूपधातु में 16, कामधातु के षट्जाति गति वाले देव, असुर एवं मनुष्य आदि 11 ।

विमलप्रभा में कहा भी है कि मनुष्य को इस जन्म में ही बुद्धत्व प्राप्त हो सकता है। देव इत्यादि पंचगतियों में उत्पन्न सत्त्व को नहीं। वे जहाँ उत्पन्न हुए हैं, वह कर्मभूमि नहीं है ।[2]

## जरायुज की उत्पत्ति

1. षड्धातु के हेतु-प्रत्ययों के आश्रय से उत्पाद का क्रम—त्रेतादि के प्रादुर्भूत होने के कारण जरायुज का देह सिद्ध होता है, इसलिये सामान्य रूप से काय, वाक्, एवं चित्त का अवभास (प्रातिभास) होता है। इस प्रकार मातापिता के शुक्रशोणित एवं गन्धर्व (चित्त) तीनों के उपादान प्रत्यय होने के कारण जरायुज के देह अर्थात् अस्थि इत्यादि 32 धातुसमूह का उत्पाद होता है। ये

---

महाभोगेन संवृत्या धन्या जडा विवेकिनः ।
त्रयो द्वीपा मनुष्याणि निर्विकल्पविचारिणः ॥ 6 ॥
जम्बूद्वीपे सुजातस्य कर्मभूमिः प्रशस्यते ।
सुकृतं दुष्कृतं कर्म मध्यमाधममुत्तमम् ॥
पूर्वजन्मविपाकोऽत्र दृश्यते सर्वजन्तुषु ॥ 7 ॥
मदमात्सर्यदुःखाश्च शठकपटाभिमानिनः ।
रागद्वेषादिमोहान्धा जराव्याधिप्रपीडिताः ॥ 8 ॥
जम्बूद्वीपे वरकोष्ठो मध्यदेशोपपद्यते ।
मृदुमध्यतीक्ष्णेन्द्रियो जन्मपूर्वकुशलमपेक्षितम् ॥ 9 ॥
मनुष्यजातं प्रथमं महाफलम्
स्वगृहान्निष्क्रान्तिर्द्वितीयस्य लाभः ।
कुशले प्रव्रज्यासाधनं तृतीयम्
एकाग्रमानसलाभश्चतुर्थन्तु उदाहृतम् ॥

—श्रीसंवरोदय तन्त्रराज—राष्ट्रीय अभिलेखालय, काठमाण्डू, हस्तलेख सं० 4/2949

1. तदिहैव जन्मनि गुह्यसमाजाभिरतो बोधिसत्त्वः सर्वताथागतानां बुद्ध इति संज्ञां गच्छति ।

गुह्यसमाजतन्त्र, सं०—विनयतोष भट्टाचार्य ।

2. द्र० कालचक्रतन्त्र एवं इसकी वृहत् टीका विमलप्रभा, राष्ट्रीय अभिलेखालय, काठमाण्डू, नेपाल, हस्तलेख सं० 5/341

सब जनयित्री (माँ) के अन्न-पान के षड्रस से प्रादुर्भूत होते हैं।[1]

देह के महाभूत पृथिवी, अप्, अग्नि एवं वायु चारों के स्थिर होकर सिद्ध होने के कारण यह षड्रस पाँच महाभूतों के सिद्ध होते हैं। इनमें से 1. तिक्त—वायुधातु, 2. कटुक—अग्निधातु, 3. मधुर—अप्धातु, 4. लवण—पृथ्वीधातु, 5. कषाय—आकाशधातु तथा 6. अम्ल—ज्ञानधातु स्वभाव है।

इस प्रकार महाभूतों के लक्षण तिक्त इत्यादि चार कषाय तथा अम्ल आकाश एवं सुप्रज्ञान धातु के प्रज्ञा एवं उपाय युगनद्ध में योग (अभिसम्बद्ध) होने के कारण वज्रदेह स्थिर होकर उत्पन्न होता है।

## गर्भ धारण का धातु प्रकार

यह गर्भधारण कर्म के आधिपत्य से चार या पांच धातुओं में निश्चित होता है। माँ की कुक्षि में प्रविष्ट विज्ञान एवं शुक्र-शोणित के मिश्रण को बीज कहते हैं। इसी बीज को बाहर पतित न होने देने वाला माँ का गर्भाशय 1. पृथिवीधातु के स्वभाव से युक्त होने के कारण विज्ञान को गर्भ में ग्रहण करता है। 2. अप्धातु के स्वभाव वाला होने से उसका स्थूल में परिणमन होता है। 3. अग्निधातु के स्वभाव का होने से वह परिपक्व होता है। 4. वायुधातु स्वभाव होने से उसकी वृद्धि होती है। 5. आकाशधातु द्वारा वृद्धि होने के अनन्तर उसका उन्मीलन होता है। 6. ज्ञानधातु स्वभाव होने के कारण यह सबके स्वामी के सदृश होता है। इसी के फलस्वरूप देह प्रतिभासित होता है।

## गर्भ स्थित पाँच धातु

शुक्र-शोणित का बाहर पतन न होने देकर दृढतया स्थिर करने वाला स्वभाव होने से पृथिवी, आर्द्रता स्वभाव होने से अप्, रक्त (लोहित) स्वभाव होने से अग्नि, स्फुरण (गति) स्वभाव होने से वायु, सुषिर (छिद्र) स्वभाव होने से आकाश—ये पांच गर्भधातु हैं। गर्भ में स्थित शुक्र, शोणित एवं चित्त—तीनों मिश्रित रूप में रहते हैं।

पिता के बोल तथा माता के कक्कोल के योग (संस्पर्श)पर आश्रित दृढ भाग के प्रति ममात्मग्रह होने से दृढ वासना पैदा होती है। देह पृथिवी धातु पर आश्रित होने से उसके प्रति ममात्मग्रह होता है। इस लिए अप्धातु सापेक्ष उत्पन्न होता है। इन दोनों से प्रेरित भाग के प्रति ममात्मग्रह होने के कारण रक्त की वृद्धि होतो है। उष्णता से अग्निधातु उत्पन्न होता है। इनके

1. इदानीं मनुष्यशरीरोत्पत्तये देहे इत्यादि। इह देहे धातुवृन्दमिति लोमत्वक्रक्तमांसास्थिमज्जादिकं धातुवृन्दं भवति हि सकलं षड्रसाहारपानादिति। लवणमधुरकटुतिक्तकषायाम्लाः षट् रसाः, एषामाहारपानवशाद्धातुवृन्दं भवति।

स्फुरण (चंचलता) के प्रति ममात्मग्रह होने से आकाशधातु उत्पन्न होता है।[1]

इस प्रकार विज्ञान को घेर कर उपर्युक्त पाँच धातुओं के वृद्धिगत होने से अविद्याप्रत्यय द्वारा संस्कारादि के रूप में प्रतीत्यसमुत्पाद के नियम द्वारा कायवाक्चित्त की सिद्धि होती है।

## गर्भावक्रमण

गर्भावक्रमण प्रक्रिया में गन्धर्वसत्त्व मुख्य नायक है। वज्रयानियों के अनुसार अन्तराभव में स्थित विविध वासना से युक्त आलयविज्ञान ही—गन्धर्वसत्त्व ही क्लिष्ट मन से युक्त होता है। जब उक्त गन्धर्वसत्त्व (अन्तराभविक) माता-पिता को सम्भोगरत देखता है, तब क्लिष्ट मन आलयविज्ञान को आकृष्ट कर मार्ग में प्रवेश के लिए प्रेरित करता है तथा आलयस्थ विविध वासनाओं में से गर्भावक्रमण वासना की वजह से वह शुक्र, शोणित एवं विज्ञान की परस्पर मिश्रित उत्तरोत्तर भिन्न-भिन्न अवस्थाओं को प्राप्त कराता है।

इस प्रकार गर्भावक्रमण के लिए माता-पिता का संभोगरत होना तथा गन्धर्वसत्त्व की उसमें अभिरुचि आवश्यक है। संभोगरत पिता एवं ऋतुमती माता के शुक्र-शोणित का जब गर्भ में समागम होता है, तभी अन्तराभविक विज्ञान गर्भ में प्रवेश करता है। तदनन्तर शुक्र-शोणित एवं विज्ञान के सम्मिश्रण को महारागाग्नि द्रवित कर एकलोलीभूत करती है। उक्त एकलोलीभूत बिन्दु पृथिवी आदि पाँच धातुओं के कृत्य से उत्तरोत्तर भिन्न-भिन्न अवस्थाओं को प्राप्त करता है तथा कालक्रम से गर्भ की निष्पत्ति होती है।[2]

---

1. बोलकक्कोलयोगेन कुन्दरुं कुरुते व्रती।
स्पर्शात् काठिन्यधर्मेण पृथिवी तत्र जायते॥
बोधिचित्तद्रवाकारादब्धातोश्चैव संभवः।
घर्षणाज्जायते तेजो गमनाद् वायुः प्रकीर्तितः।
सौख्यमाकाशधातुश्च पञ्चभिः परिवेष्टितः।
तस्मात् सौख्यं न तत्त्वाख्यं महाभूतं यतः सुखम्॥
—हेवज्रतन्त्रराज, दशम अभिषेक पटल।

2. मायोपमसमाधिं च न प्रजानन्ति मानुषाः।
अनादिकालिकक्लेशवासनाप्रबलीकृताः॥
तेन पुराकृतं कर्म च्युत्युत्पत्ति सम्भवेत्।
सामग्रीं न लभते तावत् सप्ताहम् अन्तराभवे तिष्ठति॥
अन्तराभवसत्त्वस्य देशान्तरगामिवत्।
कथञ्चित् कर्मसूत्रेण षड्गतिश्च प्रजायते॥
मातृपित्रादिसंयोगाद् ईक्षयेद् भवजन्मिनः।
अतिनिर्भरमानन्दं मुखमार्गे प्रवेश्यते॥

## कर्मवायुओं के द्वारा गर्भस्थ सत्त्व का विकास

गन्धर्वसत्त्व के गर्भावक्रमण के अनन्तर शुक्र, शोणित एवं विज्ञान के एकलोलीभूत बिन्दु से कर्मवायु आदि के द्वारा गर्भस्थ सत्त्व के विकास का क्रम शुरू होता है।

गर्भाधान के प्रथम सप्ताह में प्राणवायु मुख्य रूप से सक्रिय रहता है। उपर्युक्त शुक्र, शोणित एवं विज्ञान के एकलोलीभूत बिन्दु को प्राणवायु संक्षोभित करता है। प्राणवायु के द्वारा संक्षुब्ध पिण्ड को कलल अवस्था कहते हैं। यह गर्भ की प्रथम अवस्था है।

द्वितीय सप्ताह में परिकर्षक नामक वायु कलल नाम से अभिहित उक्त पिण्ड को संक्षोभित करता है। संक्षोभ के अनन्तर एकीभूत उस पिण्ड को अर्बुद कहते हैं। यह गर्भ की द्वितीय अवस्था है।

तृतीय सप्ताह में वर्धक नामक वायु उक्त अर्बुद पिण्ड को संक्षोभित करता है। वायु संक्षोभानन्तर उस एकीभूत पिण्ड का नाम पेशी है। यह गर्भ की तृतीय अवस्था है।

चतुर्थ सप्ताह में प्रभेदक नामक वायु उक्त पेशी पिण्ड को प्रचालित करता है। तदनन्तर उस एकीभूत पिण्ड को घन कहते हैं। यह गर्भ के प्रारम्भ की चतुर्थावस्था है।[1]

इस प्रकार उक्त क्रम से गर्भ के प्रारम्भिक चार सप्ताह में चार कर्मवायुओं के द्वारा गर्भस्थ सत्त्व का विकास होता है। उक्त अवस्था में कर्मवायु गर्भस्थ पिण्ड को संक्षोभित कर उसके कषाय का प्रक्षेपण करता है। गर्भस्थ सत्त्व के घन अवस्था पर्यन्त के विकासक्रम में नाड़ी का उत्पाद नहीं होता, अतः विकासक्रम की इस अवस्था को अनुत्पन्न नाड़ी की अवस्था भी कहा जाता है।

---

अश्वारोहणवज्ज्ञानं वायुवाहनरूढवत्।
शीघ्रतरं समागत्य मुहूर्तक्षणमात्रकम्॥
द्वासप्ततिसहस्रं च नाडीः संचोद्य तत्क्षणम्।
परमानन्दसंप्राप्तमालिकालिद्रवीकृतम्॥
शुक्रशोणितयोर्मध्ये बिन्दुरूपेण तिष्ठति।

—महासंवरोदय तन्त्रराज, उत्पत्ति निर्देश पटल।

1. शुक्रशोणितयोर्मध्ये बिन्दुरूपेण तिष्ठति।
प्रथमं कललावस्था अर्बुदं च द्वितीयकम्॥
तृतीयः पेशितां जातश्चतुर्थं घनमेव च।
वायुना प्रेष्यमाणस्य मांसाकारवद् भवेत्॥

—महासंवरोदयतन्त्रराज, उत्पत्ति निर्देश पटल।

## पाँच मूल वायुओं द्वारा गर्भस्थ सत्त्व का विकास

**प्राणवायु**—घन अवस्था के अनन्तर गर्भाधान के पाँचवें सप्ताह में संग्राहक वायु के क्षेपण एवं संग्रहण से गर्भपिण्ड प्रशाखा अवस्था को प्राप्त होता है। यह गर्भ की पाँचवीं अवस्था है। प्रशाखा के प्रथम दिन अथवा गर्भ के २०वें दिन से सर्वप्रथम प्राणवायु से मध्यमा नाड़ी का उत्पाद होता है। श्वेत एवं रक्त बिन्दुओं से गर्भस्थ देह के बीच शरीर के मध्य भाग में मध्यमा नाड़ी का उदय होता है। मध्यमानाड़ी का एक सिरा माँ की रसना नाड़ी से जुड़ता है। मध्यमा नाड़ी की निष्पत्ति के साथ प्राणवायु उससे आश्रित होकर प्रवृत्त होता है। इस प्रकार गर्भाधान के प्रथम माह के अन्त में मध्यमा नाड़ी का उत्पाद सम्पन्न होता है।

**अपानवायु**—गर्भाधान के द्वितीय महीने में प्राणवायु से अपानवायु का आविर्भाव होता है। अपानवायु को पृथिवी धातु एवं ज्ञान स्वभावात्मक कहा गया है। उक्त वायु अधोमुखी होती है। इसके कारण गुह्यचक्र में आश्रयभूत केशसदृश अतिसूक्ष्म 32 नाड़ियों के समूह का उत्पाद होता है, जो शरीर के अधोभाग को निष्पन्न करता है। तदनन्तर गर्भस्थ पिण्ड की आकृति कूर्म के समान हो जाती है।

**उदानवायु**—उक्त कूर्माकार गर्भपिण्ड के तृतीय महीनेमें प्रवेश के समय प्राणवायु से उदानवायु का आविर्भाव होता है। यह तेजोधात्वात्मक होता है। ऊर्ध्वमुखी होने से यह शरीर के ऊर्ध्वभाग को निष्पन्न करता है।

**व्यान वायु**—गर्भाधान के चतुर्थ महीने में प्राणवायु से व्यानवायु का आविर्भाव होता है। यह अप्धात्वात्मक होता है। यह सूक्ष्म अंग-नाड़ियों को प्रकट करता है तथा हाथ, पैर एवं कण्ठ को स्फुटित करता है। इससे महासुखचक्रस्थ आधारभूत 16 नाड़ियां, संभोग चक्रस्थ 32 नाड़ियाँ तथा केशप्रमाण अतिसूक्ष्म अनेक नाड़ियाँ भी उत्पन्न होती हैं।

**समान वायु**—गर्भ के पाँचवें महीने में प्राणवायु से समानवायु का आविर्भाव होता है। समानवायु को वायुधातु स्वभाव कहा है। इसकी वजह से फेफड़ा, हृदय आदि अन्तःस्थ अंगों की उत्तरोत्तर निष्पत्ति होती है। इस अवस्था में गर्भस्थ पिण्ड की तुलना वराह से की जाती है।

इस प्रकार पाँच मूल वायुओं के द्वारा गर्भस्थ पिण्ड वराह अवस्था को प्राप्त करता है। तदनन्तर पाँच वायुओं की शक्ति (बल) भी समाप्त हो जाती है। उक्त अवस्था में तथा छठे महीने से गर्भस्थ सत्त्व को दुःख-वेदना की अनुभूति होती है, जिसके फलस्वरूप गर्भस्थ सत्त्व के शरीर का हिलना-डुलना शुरू होता है। उस समय तक 360 अस्थि खण्ड भी निष्पन्न हो जाते हैं।

गर्भ के तृतीय से छठे महीने तक पाँच मूल वायुओं के द्वारा गर्भस्थ सत्त्व का संवर्धन शुरू होता है। उक्त अवधि में मूलवायुओं के बलाधान से पाँच स्कन्धों की निष्पत्ति होती है। तृतीय महीने में प्राण, अपान एवं उदानवायु से बिज्ञान एवं संस्कार स्कन्ध निष्पन्न होते हैं। चतुर्थ एवं

पंचम महीने में व्यान एवं समान वायु से संज्ञा एवं वेदना स्कन्ध निष्पन्न होते हैं। तदनन्तर छठे महीने में रूपस्कन्ध भी निष्पन्न होता है। इस प्रकार उक्त क्रम से पंचस्कन्धों की निष्पत्ति होती है। तदनन्तर अंग-वायुओं के द्वारा गर्भस्थ सत्त्व का संवर्धन कार्य शुरू होता है।

## पाँच अंगवायुओं द्वारा गर्भ का विकासक्रम

**नाग वायु**—गर्भ के छठे महीने में प्रवेश के अनन्तर नागवायु सक्रिय होता है। वह पृथिवी धातु के अंश चक्षुर्द्वय इन्द्रिय का उत्पाद करता है। नागवायु ज्ञान-स्वभावात्मक होता है। ज्ञान एवं पृथिवी की प्रज्ञोपायात्मक युगनद्ध अवस्था से उत्पन्न चक्षुर्द्वंय की उत्पत्ति 'मोहवज्र' के रूप में मानी गयी है।

**कूर्म वायु**—गर्भाधान के सातवें महीने में प्रवेश के अनन्तर कूर्मवायु सक्रिय होता है। यह वायु धातुस्वभावात्मक होता है। यह अप्धातु के अंश से श्रोत्रेन्द्रिय का उत्पाद करता है। इस प्रकार वायु एवं जल की प्रज्ञोपायात्मक युगनद्ध अवस्था से उत्पन्न श्रोत्रेन्द्रिय की उत्पत्ति 'द्वेषवज्र' के रूप में मानी गयी है।

**कृकर वायु**—गर्भाधान के आठवें महीने में प्रवेश के अनन्तर कृकर वायु सक्रिय होता है। कृकर वायु अग्निधातु-स्वभावात्मक होता है। यह वायु-धातु के अंश से घ्राणेन्द्रिय का उत्पाद करता है। इस प्रकार अग्नि एवं वायु की प्रज्ञोपायात्मक युगनद्ध अवस्था से उत्पन्न घ्राणेन्द्रिय 'मात्सर्यवज्र' मानी गयी है।

**देवदत्त वायु**—गर्भ के नवें महीने में प्रवेश के अनन्तर देवदत्त वायु सक्रिय रहता है। देवदत्त वायु जिह्वेन्द्रिय का उत्पाद करता है। इस प्रकार जल एवं अग्नि की प्रज्ञोपायात्मक युगनद्ध अवस्था से उत्पन्न जिह्वा की उत्पत्ति 'कामवज्र' रूप में मानी गयी है।

**धनंजय वायु**—गर्भाधान के दसवें महीने में प्रवेश के अनन्तर धनंजय वायु सक्रिय होता है। धनंजय वायु पृथिवी-धातुस्वभावात्मक है। यह वायु धातु के अंश से कायेन्द्रिय का उत्पाद करता है। इस प्रकार पृथिवी वायु की प्रज्ञोपायात्मक युगनद्ध अवस्था से उत्पन्न कायेन्द्रिय 'ईर्ष्यावज्र' रूप मानी गयी है।

इस प्रकार पाँच अंगवायुओं द्वारा गर्भस्थ सत्त्व के उपर्युक्त विकासक्रम का वर्णन गुह्यसमाज-तंत्र के मतानुसार है। गर्भस्थ सत्त्व के दस वायु प्रत्येक माह में उत्पन्न होकर गर्भ का विकास करते हैं। इसलिए दस माह में दस वायुओं का बल भी समाप्त हो जाता है।

## गर्भस्थ सत्त्व की नाड़ी, वायु एवं बिन्दु की पूर्णता

गर्भस्थ सत्त्व के पंचस्कन्ध, अष्टादश धातु एवं द्वादश आयतन के पूर्ण होने पर प्रत्येक दिन 200 नाड़ियाँ उत्पन्न होती हैं। इस प्रकार प्रत्येक माह में 6000 नाड़ियों का उत्पाद होता है और

गर्भाधान के 9 महीने की अवधि में 54000 नाड़ियाँ उत्पन्न होती हैं। किन्तु गर्भनिष्क्रमण के पश्चात् भी तीन महीने तक नाड़ियों का उत्पाद होता रहता है। अतः 12 महीने पूर्ण होने पर कुल 72000 नाड़ियाँ भी परिपूर्ण हो जाती हैं।

इस प्रकार उत्पन्न होने के अनन्तर प्रत्येक दिन दो-दो नाड़ी शुष्क होती हैं। यहाँ शुष्क से अभिप्राय इन नाड़ियों के कृत्य के क्षीण हो जाने से है, किन्तु इन नाड़ियों के मूल का शुष्क होना कदापि संभव नहीं है, क्योंकि कुछ सूक्ष्म नाड़ियाँ देह में किंचित् अवशिष्ट रहने तक उत्पन्न होती रहती हैं। ऐसी सूक्ष्म नाड़ियाँ देह में रोम की संख्या के बराबर होती हैं। संख्या में 35000000 सूक्ष्म नाड़ियाँ हैं, ऐसा वज्रगर्भटीका आदि तन्त्र ग्रन्थों में वर्णन मिलता है।

आठवें महीने तक गर्भस्थ सत्त्व की जिह्वा उत्पन्न नहीं होती। जिसके कारण गर्भस्थ सत्त्व माँ की रसना नाड़ी के अन्न-रस संचार द्वारा विकास को प्राप्त होता रहता है। नवें महीने में गर्भस्थ सत्त्व की जिह्वा के उत्पन्न होने से वह माँ के अशुचि आहार का उपभोग (भक्षण) करता है। इसके उपभोग से उसके भीतरी स्थानों में कषाय (अवशिष्ट) धातु मूत्रादि का भी उत्पाद होता है।

इस प्रकार वायुस्वभाव कायिक एवं चैतसिक वेदना से गर्भस्थ सत्त्व को भूख-प्यास का परि-ज्ञान होता है, जिसके कारण उसे तीव्र दुःख की[1] अनुभूति होती है।

## गर्भस्थ सत्त्व का उत्पत्तिक्रम

गर्भस्थ सत्त्व के नवें महीने में प्रवेश के अनन्तर उसे अप्रिय, दुःख, अशुचि, दुर्गन्ध, अन्धकार एवं संबाध इत्यादि संज्ञा होने लगती है, जिसके कारण उसे उत्पन्न होने की आकांक्षा होती है।[2] कन्या होने पर गर्भ माता की कुक्षि में बाईं ओर होता है तथा पुत्र होने पर दाहिनी ओर[3]। अतः गर्भ में स्थित निर्यातक वायु द्वारा गर्भस्थ सत्त्व का सिर उलट कर नीचे एवं पैर ऊपर हो जाता है। इस प्रकार गर्भद्वार से गर्भस्थ सत्त्व की उत्पत्ति होती है।

1. वाराह्ये भावे ततो रन्ध्राख्ये नवमे मासे पूर्णे सति क्वचिद् दशमे, एकादशे द्वादशे वा। वाराह्य-भावावसाने घोरदुःखं भवति। प्रसवनकाले योनिपीडितस्य नारसिंहे भावे जातकस्योत्पत्तिरिति गर्भोत्पत्तिनियमः।

—विमलप्रभा, द्वितीय पटल।

2. धर्मोदययोनिद्वाराणाम् अभिमुखं भवति निश्चितम्।
3. दक्षिणकुक्षिमाश्रित्य उत्कुटकस्थितमभिमुखम्।
वामकुक्षिं समाश्रित्य प्रज्ञोदरमुखी भवेत्॥ 25॥
बीजाधानक्रमे काले मुहूर्तं लक्षयेत् सुधीः।
दक्षिणे वहति यो वायुः पुरुषो भवति सर्वदा॥ 26॥
वामे वहति यो वायुः स्त्री सम्भवति निश्चितम्।
उभयोर्मध्यगतं बीजं नपुंसकं सदा भवेत्॥ 27॥

—संवरोदयमहातन्त्रराज, उत्पत्ति निर्देश पटल।

निर्यातक वायु के प्रकृष्ट एवं क्षीण बल द्वारा गर्भस्थ सत्त्व के उत्पाद में सौकर्य एवं दुष्करता होती है। उपर्युक्त वर्णन गम्भीर (गूढार्थ) तन्त्र पिटकों के अनुसार किया गया है।

मातृ गर्भ में देह के पूर्ण होने के अनन्तर गर्भकोश को भेद कर बाहर उत्पन्न होने तक की इस अवस्था को नृसिंह का अवतार माना गया है।[1] यहाँ विष्णु के दशावतार का वर्णन संचयतन्त्र के कथनानुसार किया जा रहा है। यह वेद के आख्यानतन्त्र से उद्धृत किया गया है। यहाँ वज्रयानी साधकों ने बाह्यार्थवादियों (तीर्थिकों) को अपनी ओर आकर्षित करने के लिए 'चित्तवज्र' को 'विष्णु' के नाम से अभिहित किया है। इन्हीं को भाजनलोक एवं सत्त्वलोक का कर्ता कहा है।

इसके पश्चात् दो महीने तक गर्भस्थ सत्त्व का सिर एवं चार अंगों का पुटक निकलने लगता है, जो कूर्म के सदृश होता है। अतः इसे कूर्म अवस्था कहते है।[2]

यहाँ से प्रसूति (उत्पत्ति) पर्यन्त गर्भस्थ सत्त्व माँ के शरीर से रस (भोजन) ग्रहण करता है, जिसके कारण उसे मल-मूत्र आदि होते हैं। अतः इस अवस्था को वराह अवस्था कहा है।[3]

गर्भस्थ सत्त्व उत्पत्ति के दिन अपने हाथ से गर्भाशय को भेदन कर बाहर उत्पन्न होता है, अतः उत्पत्ति की इस अवस्था को नृसिंह अवस्था कहा गया है।[4]

गर्भस्थ सत्त्व की उत्पत्ति के अनन्तर दाँत उत्पन्न होने तक सत्त्व पंगु के सदृश होता है; अतः इसे वामन अवस्था कहा गया है।[5]

यहाँ से दाँत पतित न होने तक दांत परशु के सदृश होते हैं। इस कारण इसे परशुराम अवस्था कहा गया हैं।[6]

---

1. तथैका प्रसवनकाले नरसिंहावस्था। तृतीयऋतुदिनं यावदेवं सप्तमासाज्जातदिनं यावत्। नारसिंहे भावे प्रसूतिर्भवति कराभ्यां योनिविदारणात्। इह मात्स्ये भावे मत्स्याकारो भवति बोधचित्तवज्रो विष्णुः ऋतुदिनं यावत्ततः कौर्मे भवो कूर्मभावो भवति।

—विमलप्रभा, द्वितीय पटल।

2. तृतीयमासे पूर्णे सति मुखकरचरणोद्देशनं किंचिदत्र। इह प्राङ्मत्स्यावस्था दिने गते सति कूर्मावस्था मुखकरचरणस्थानेषु पञ्चस्फोटका भवन्ति। हस्तपादौ च कण्ठो भवति समशिरः कूर्मः। अपराः सूक्ष्मा नाड्यः करचरणमुखे कण्ठदेशे करचरणानां षट्सन्धिषु मुखे कण्ठे सहजसंभोगनाड्य इति सूक्ष्माश्चतुर्थे मासे पूर्णे सति भवन्तीति कूर्मावस्था।
3. पञ्चमे मासे वाराह्यभावे मांसान्याश्रित्य चास्थीनि खरसहुतभुगिति षष्ठ्युत्तरत्रिशतान्यस्थीनि सन्धयश्च तावत्यः षष्ठे मासे च चकारात् वाराह्यभावे मांसरुधिरं भवति।
4. तृतीय-ऋतुदिनं यावदेवं सप्तमासाज्जातदिनं यावन्नारसिंहे भावे प्रसूतिर्भवति।
5. बालकाले च वै दन्तोत्थानाद् वामनावस्था। वामन्ये भावे बालभावो भवति।
6. दन्तोत्थानाद् दन्तपातं यावत्परशुरामावस्था।

—कालचक्रतन्त्रटीका, विमलप्रभा, द्वितीय पटल।

दाँत गिरने के पश्चात् सोलह वर्ष तक सत्त्व के देह में रसवृद्धि होने लगती है। अतः रसवृद्धि होने की इस अवस्था को रामचन्द्र अवस्था कहा गया है।[१]

यहाँ से श्वेत केश उत्पाद होने तक सत्त्व कृष्ण के सदृश हठी होता है। अतः इस अवस्था को कृष्णावस्था कहा गया है।[२]

यहाँ से मृत्यु पर्यन्त सत्त्व पुत्र, नाती इत्यादि अपने वंशजों (स्वजाति) को क्रिया-अक्रिया (करणीय-अकरणीय) का उपदेश देता है। इस कारण इस अवस्था को बुद्ध अवस्था कहा गया है।[३]

मृत्यु के दिन सत्त्व के सभी धातु एक में मिश्रित होते हैं। अतः इसे कल्कि अवस्था कहा गया है।[४]

इस प्रकार उपर्युक्त दशावतार की स्थिति इस सत्त्व देह में ही मानी जाती है।

## उपसंहार

संक्षेप में वज्रयानी साधकों के अनुसार वज्रदेह की सिद्धि (निष्पत्ति) में शुक्र से मज्जा, अस्थि, स्नायु तथा रोम (केश), रज से चर्म, रक्त एवं मांस सिद्ध होता है, जिसे तन्त्रशास्त्रों में षट्कोश भी कहा गया हैं।[५]

---

1. कौमारे यौवनेऽन्या इति दन्तपातात् षोडशवर्षावधेः प्रथमविपुला रामावस्था।
2. तथा अपरा विपुला षोडशवर्षात् पलितोत्पत्तिं यावत् कृष्णावस्था।
3. पलितोत्पतेर्मरणदिवसं यावद् बुद्धावस्था।
4. मरणदिने सर्वभूतस्यैकलोलीभूतत्वाच्छरीरे कल्क्यवस्था भवति। तथा च—पूर्वोक्तद्विनृपतिद्वात्रिंशद्-दशनान्युद्भवं यान्ति। राम्ये परशुराम्ये भावे पतन्ति। स्फुटमपि कपटं कारयेदिति स एव बोधिचित्तो विष्णुः कार्ष्ण्ये भावे मायां कारयेत्। बौद्धे भावे शान्ति करोति। सत्त्वानां व्रतमपि नियतं याति मृत्युं च कालवये। कालवये भावे पूर्वोक्तविधिना मरणं यातीति दशावतारः।

   —विमलप्रभा, द्वितीय पटल।
5. मातृगर्भस्थयोः शुक्ररजसोर्विकाराः गर्भाधानमारभ्य प्रसूतिपर्यन्ता उच्यन्ते। शुक्र इत्यादिना। इह शरीरे षटकोषा जातस्य भवन्ति शुक्रे मज्जा भवति, अस्थीनि भवन्ति, नाड्यश्च स्नायवो भवन्ति। रजसि चर्म रक्तं च भवति मांसं च भवति।

   —कालचक्रतन्त्रटीका, विमलप्रभा, द्वितीय पटल।

   अष्टधातुः पैतृको ज्ञेयस्तेजोधातुश्च मातृकः।
   त्वङ् मांसं च रक्तं च मातृजा इति कथ्यते॥
   स्नायु मज्जा च शुक्रं च पितृजा इति कथ्यते।
   एवं षट्कौशिकं पिण्डं वज्रसत्त्ववचो यथा॥
   रूपं वेदना संज्ञा संस्कारा विज्ञानम् एव च।
   पञ्च बुद्धस्वभावास्तु स्कन्धोत्पत्ति विनिश्चिता॥

